केऽपि स्वदोषमार्जनार्थमाहुः—यस्मात् पुस्तकात् ते प्रतिलिपिमाचरन्ति तदेवाशुद्धतममिति। अतो यथा दृष्टं तथा लिखितम् लेखकस्य नास्ति दोष इति। इदमेव आचारप्रदीपस्य कस्मिंश्चित् पुस्तके नामनिर्देशरहितः कश्चिल्लेखकोऽवोचत्—

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते॥

वैद्यः श्री-अभयानन्दः शूद्राह्निकाचारपुस्तके प्रतिलिपिं समाप्य प्रोवाच—"यथा दृष्टं तथा लिखितं लेखके नास्ति दोषः।"

रामायणे लङ्काकाण्डस्योत्तरकाण्डस्य चानुलेखकः श्रीरामनाथ औपम्येन यदुक्तवान् सत्यमेव तच्छोभनमिति—

यथा दृष्टं तथा लिखितं लेखके नास्ति दूषकः।
भीमस्यापि रणे भङ्गो मुनीनां च मतिभ्रमः॥

श्रीवसुदेवो हरिवंशस्य प्रतिलिपिकाले निजगाद 'यत् पुस्तकं वीक्ष्य मया व्यलेखि तदत्यशुद्धं..... ......'।

विनायकस्तवराजाभिधेयपुस्तकप्रतिलिपिं समाप्य लेखको विष्णुदास एवमेव वाक्यं पुनर्बभाषे।

इत्थं चेत् पुस्तिका यथायथमनुसंधीयेरन्, तदा सत्यमेव भारतस्य अदृष्टपूर्वमितिहासं पुनरुद्ध्रियेत; नास्ति तत्र सन्देहलेशः। असामान्यं पाण्डित्यम् अनुसंधानानुसारिणी दृष्टिभङ्गी कठोरपरिश्रमोऽध्यवसायश्चैतेषां चतुर्णां गुणानामेकत्र समावेशं विना समीक्षेयं न परिपुष्येत। भारतवर्षे येषामत्यल्पानामसौ विविधा गुणावली वरीवर्तते, तेषामेवावधानमत्राकृष्टं चेत्, एतत् समीक्षाकारिणः श्रमः सफलत्वेन विविच्येत।

———

# आधुनिकदृष्ट्या वर्णाभिव्यक्तिप्रक्रियासमीक्षा*

श्रीरामनारायणदासः, अनुसन्धाता,

वा० सं० वि० वि०, वाराणसी

अस्मिन् निबन्धे नूतनं भौतिकविज्ञानं श्रीभर्तृहरिकृतं वाक्यपदीयञ्च समाश्रित्य अकारादिवार्णानां समभिव्यक्तिप्रक्रियां विदुषां पुरःसरं विशदरूपेण समुपस्थापयितुं सफलः प्रयत्नः कृतः। शरीरान्तः किं तत्त्वं विद्यते यद् अकारादिवर्णात्मना बहिरभिव्यज्यते? ध्वन्यभिलेखनयन्त्रे (In to the gromofone) परावाग् यद्वा मध्यमानादनामकं न किमपि तत्त्वं विद्यते, किन्तु तत्रापि स्वरव्यञ्जनयोरभिव्यक्तिर्जायते। अत्र को हेतुः?

वैयाकरणमतानुसारेण पराया वाच एव अकारादिवर्णात्मना अभिव्यक्तेः स्वीकारात्, ध्वन्यभिलेखनयन्त्रे च तत्सत्तायाः प्रतीत्यभावेऽपि ध्वन्यभिव्यक्तेः सत्त्वाद् व्याकरणाभिमतवर्णाभिव्यक्तिप्रक्रियायाः मृषात्वापत्तिं समूलं समुत्पाट्य यथार्थतत्त्वं व्यावृणवम्। विद्युदूर्जसो ध्वन्यूर्जोरूपेण, ध्वनिधर्मसमाविष्टविद्युदूर्जसश्च ध्वनिरूपेण परिवर्तनस्य या भौतिकविज्ञानसम्मता प्रक्रिया, तया सह देहान्तर्भागे वर्णाभिव्यक्तौ जायमानायाः प्रक्रियायास्तुलनापि कृता।

वायोः शब्दत्वापत्तिं स्वीकुर्वतां शिक्षाप्रातिशाख्यकाराणां निकाये या वर्णाभिव्यक्तिप्रक्रिया दृष्टिपथं समायाति, तया सह भौतिकविज्ञानविदुषां सम्प्रदाये व्यवहृताया अकारादिवर्णाभिव्यक्तिप्रक्रियायाः किञ्चित् सामञ्जस्यं परिलक्ष्यते। अकारादिवर्णं वायोः परिणामभूतं मन्यमानानां मतानुसारेण वक्तुर्घटपटादिशब्दोच्चारणेच्छया हृदि संजातेन प्रयत्नेन समुदीरितः प्राणवायुः कण्ठताल्वादिस्थानेष्वभिहतः सन् शब्दरूपेण परिणमते। तथा चोक्तं वाक्यपदीये ब्रह्मकाण्डे—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥
(कारि०–१०८)

---

*सूचना—ध्वनिविज्ञानग्रन्थेषु यद्वा भाषाविज्ञानग्रन्थेषु एवं सङ्केतो न समुपलभ्यते, येन "अणव एव शब्दरूपेण परिणमन्ते" इत्यस्य निर्देशः समुपलभ्येत। अतः "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति भर्तृहर्युक्तकारिकायाम् अणोः शब्दत्वापत्तिं विहाय शेषयोर्द्वयोरेव शब्दत्वापत्तिर्भौतिकविज्ञानदृष्ट्या व्याख्यास्यते।

प्राणवायुर्वर्णानां निमित्तं कारणमित्यस्यास्तात्पर्यं विद्यते । जीवादिवैज्ञानिकास्तु "प्राणवायोः कण्ठस्थितेन स्वरतन्तुना सह यदा आघातः सञ्जायते, तदा अकारादिवर्णानामभिव्यक्तिः" इत्येवं मन्यन्ते । एतेषां मतानुसारेण "अकारादिवर्णाः कण्ठताल्वादिस्थानेषु स्वरतन्तौ च प्राणवायोराघातेन जन्याः" इति स्वीकाराद् वायुर्वर्णानां निमित्तं कारणम्, न तूपादानम् ! परन्तूभयोर्मतयोर्वर्णाभिव्यक्तिप्रक्रियायां कण्ठादिस्थानेषु वायुसंयोगस्यान्वयव्यतिरेकाभ्यां वर्णानामभिव्यक्तेरनभिव्यक्तेश्च दर्शनात् सामञ्जस्यमपि समायाति । शब्दकार्यवादिभिर्नैयायिकैः सह त्वेतेषामाधुनिकानां वर्णाभिव्यक्तिप्रक्रियाविषये सम्यक्तया सामञ्जस्यं परिलक्ष्यते । यतो ह्येते नैयायिका अपि वायुं वर्णस्य निमित्तमेव कारणं मन्यन्ते, न तूपादानम् । तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

यः संयोगविभागाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ॥
(कारि०–१०२)

करणैः कण्ठताल्वादिभिः सह वायोः संयोगविभागाभ्यां य उपजन्यते, स स्फोटः । अत्र स्फुटतया वायुर्वर्णस्य निमित्तं कारणं प्रतीयते । वर्णविवक्षया प्राणवायुर्यदा कण्ठादिस्थानमभिहन्ति, तदा अकारादिवर्णा अभिव्यज्यन्ते ।

वस्तुतस्तु भौतिकैः स्वरतन्तौ वायुसंघाताद् वर्णाभिव्यक्तौ या प्रक्रिया प्रतिपादिता, ततोऽन्यत्र ध्वनेः पुनरुत्पादनस्थले (In to the gromophone) या प्रक्रिया दृश्यते, तत्र वर्णाभिव्यक्तौ वायोरुपादनत्वं[1] दृश्यते । ध्वनिलेखनयन्त्रे (In to the fonograph) ध्वनिपेटिकोपरि (on the sound-box) संस्थापिते मण्डलके (on the record)[2] बह्व्यो रेखा अङ्किता भवन्ति । तत्र प्रत्येकं रेखासु ध्वन्यनुरूपा वक्राकृतिका नदीपर्वतोपत्यकादिवदुच्चावचा गर्ता निर्मीयन्ते । ध्वनिपेटिकायां वायुं प्रपूर्य मण्डलकोपरि ध्वनिपेटिकासंश्लिष्टां सूचिकाञ्च सन्निधाप्य ततो मण्डलकं यन्त्रद्वारा परितो भ्राम्यते । मण्डलकस्य परि-

---

१. ध्वनि का पुनरुत्पादन—ध्वनि के पुनरुत्पादन के लिये ऊर्जा कसी हुई कमानी से प्राप्त होती है । जिसके कारण रेकार्ड निश्चित रूप से घूमता है । नालियों में कटे वक्र रूप से सुई में कम्पन होता है । यह कम्पन तनुपट पर पहुँच कर वायु में उसी प्रकार की तरङ्गें उत्पादित करता है । और इस प्रकार ध्वनि पुनरुत्पादित होती है ।—(के० पी० घो० माध्यमिक भौतिक, भाग २. पृ० ६३) ।

2. An instrument for recording and reproducing the living voice.

भ्रामणेन तत्संश्लिष्टसूचिकायामुच्चावचध्वनिगर्तानुरूपं कम्पनं जायते। ध्वनिगर्तानुरूप-परिकम्पितसूचिका च क्रमशः स्वकम्पनानुरूपं वायुं कम्पयति, ध्वन्यनुरूपपरिकम्पितश्च वायुर्वर्णात्मना परिणतः सन् ध्वन्यभिलेखनयन्त्रस्थं ध्वन्युत्तेजकयन्त्रं (microphonc) प्राप्य उच्चध्वन्यात्मना तारस्वरेण सर्वैः श्रूयते। अत्र ध्वन्यभिव्यक्तौ सूचिका निमित्तं कारणम्, वायुश्चोपादानम्। एवंरीत्या अन्तःकरणेऽपि वक्ता यं शब्दं प्रयोक्तुमिच्छति, तच्छब्दानुसारि प्रयत्नं कुरुते। येन क्रमेण वक्तुरिच्छानुवर्ती प्रयत्नः सञ्जायते, तेनैव क्रमेण स्थानेष्वभिहते वायावपि शब्दाकृतिकपरिणामः सञ्जायते। तदुक्तं वाक्यपदीये ब्रह्मकाण्डे–' लब्धक्रियः प्रयत्नेन ........" इति। अत्र प्रक्रियायां वर्णाभिव्यक्तौ वायोरुपादानत्वं स्पष्टतया प्रतीयते।

परन्त्वेषा सर्वा प्रक्रिया वैखर्यामेव शब्दस्येयत्तां जानतां स्थूलदृशां सरणिमनुसरति। शब्दस्य सूक्ष्मातिसूक्ष्मस्वरूपं साक्षात्कुर्वतां मनीषिणां वर्णाभिव्यक्तेर्विलक्षणा प्रक्रिया दृश्यते। सूक्ष्मवाक्स्वरूपं ज्ञानमेव अकारादिध्वन्यात्मना आविर्भवतीति तेषां राद्धान्तः। तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥
(कारि०-११२)

"सूक्ष्मवागात्मना स्थितस्य ज्ञानस्य कथं कादिध्वन्यात्मनाभिव्यक्तिर्निष्पद्यते ?" इतीमं विषयं समवगन्तुं शरीराद् बहिर्देशे भौतिकवैज्ञानिकैः प्रतिपादितः प्रक्रियात्मको विद्युद्ध्वन्योः परस्परं परिवर्तनस्य विधिः समवगन्तव्यः। ततः सूक्ष्मवागात्मज्ञानस्य तेजसा पाके निष्पन्ने सति स्थूलध्वन्यात्मना निष्पत्तिः समवगन्तुं पार्यते।

भौतिकवैज्ञानिकैरकारादिध्वनावूर्जः स्वीक्रियते। ऊर्जसो लक्षणं च गुरुत्वकाठिन्ययो-रभाववत्त्वे सति स्थानान्तर-रूपान्तरप्रयोजकत्वमिति। यथा सौरप्रकाशः, विद्युत्, अग्नि-रिति। अस्मत्प्रकोष्ठे यः सौरादिप्रकाशस्तमोऽपनोदादिकार्येषु प्रयुज्यते, तस्मिन् भारवत्त्वं काठिन्यञ्च नानुभूयेते, केवलं तापमात्रम्, तण्डुलादिद्रव्येषु च विक्लित्त्यादिजनकत्वं प्रत्यक्षी-क्रियते। न च ध्वनौ केवलमभारवत्त्वस्य निर्गतकाठिन्यत्वस्य च प्रतीतेर्द्रव्यं स्थानान्तरितं रूपान्तरञ्च कर्तुं शक्तेरभावस्य सत्त्वाद् ध्वनावूर्जोलक्षणस्याव्याप्तिदोषापत्तिः, तेन ध्वनेरूर्जस्त्वं न सिद्धयतीति वाच्यम् ! विषापहरणादिषु शब्दशक्तेरनुभवात्। नूतना भौतिकशास्त्रिणः पराश्रव्य-

ध्वनिद्वारा रासायनिकक्रियया द्रव्याणि निर्मीयन्ते[1], विषापनोदादिकार्येषु पराश्रव्यध्वनेरुपयोगं विधाय साफल्यं प्राप्ताश्च दृश्यन्ते ।

ऐन्द्रजालिको मारणमोहनादिसामर्थ्यविशिष्टसावरादिमन्त्राणां प्रयोगकुशलो वा यं पदार्थं यथारूपं कर्तुं समीहते, तं तथा विदधाति । अग्नौ तमोऽपनोदादिसामर्थ्यवद् विषापहरणादिषु नियतशक्तिकानां शब्दानां सामर्थ्यदर्शनाद् ध्वनेरूर्जस्त्वं समीचीनमेव ।

अकारादिध्वन्यूर्जसो विद्युद्रूपेण, ध्वनिधर्मसमाविष्टविद्युदूर्जसश्च ध्वनिरूपेण परिवर्तनं कर्तुं शक्यते । अयं विषयो ध्वनिविज्ञानादिग्रन्थेषु बहुशो व्याख्यातः[2] । यथा ध्वनिश्रावकयन्त्र-

---

१. **रासायनिक**—पोटैशियम आयोडाइड (KI) के घोल में या हाइड्रोजन सल्फाइड (H2S) में पराश्रव्य ध्वनि का सञ्चार होने से इन यौगिकों में से I और S अलग हो जाते हैं। यह प्रक्रिया आक्सीकरण की है। पराश्रव्य ध्वनि से उलटी क्रिया भी होती है जिसे लघुकरण या रिडक्सन कहते हैं, जैसे मर्क्यूरिक (mercuric chloride) का मर्क्यरस क्लोराइड (Mercurour chloride) में बदल जाना ।—(पृ० सं० २३२)

**जैविक**—पराश्रव्य ध्वनि से बहुतेरे रोगों के कारण बैक्टीरिया और वाइरस नष्ट हो जाते हैं। इसका उपयोग सामान्यतः पानी, दूध आदि को रोग के जीवाणुओं से मुक्त करने में किया जाता है। पराश्रव्य ध्वनि बैक्टीरिया आदि से एंजाइम, टॉक्सिन (विष) आदि निकालने में भी सफल होती है, जिसका प्रयोग उसे निरापद बनाकर रोगों के भावी आक्रमण से रक्षा में किया जाता है। (पृ० सं० २३३)

जो दो द्रव आपस में नहीं मिलते उन्हें मिलाकर इमल्सन तैयार करना पराश्रव्य ध्वनि का काम है। (पृ० सं० २३४)

२. **टेलीफोन**—इस यन्त्र को ग्रेहाम बेल ने (greham Bell 1876) तैयार किया। इसमें एक स्थायी चुम्बक होता है जिसके ध्रुवों के पास इस्पात का पतला डायफ्राम रहता है। डायफ्राम का व्यास लगभग २ इञ्च और मोटाई ·००६ और ·०१२ इञ्च के बीच होती है। इसका मध्य भाग दोनों ध्रुवों को छुये हुये, पर उनसे इतना दूर रहता है कि खिचकर या कम्पन में यह ध्रुवों से सट न जाय, डायफ्राम की ओर दृढता से कसी रहती है। चुम्बक के ध्रुवों के छोरों पर कुण्डली (coil) लिपटी रहती है। डायफ्राम में तनाव रहता है। और सामान्य स्थिति में चुम्बक की ओर थोड़ा खिंचा रहता है। चुम्बकीय क्षेत्र में होने से डायफ्राम होकर चुम्बकीय फ्लक्स निकलता है। फ्लक्स का धन B हो तो डायफ्राम पर लगनेवाला बल $B_2$ का अनुपाती होता है।

स्योरःप्राचीरे यदा ध्वनिः समापतति, तदा इस्पातनिर्मितमसूक्ष्मतन्तुरूपम् उरःप्राचीरमपि (Diaphragm) ध्वन्यनुरूपं परिस्पन्दते, ध्वनिधर्मसमाविष्टमुरःप्राचीरञ्च त्वराकम्पन-शील[1]नामकं तत्त्वं स्वानुरूपं कम्पयति। परिस्पन्दमानं त्वराकम्पनशीलञ्च तत् तत्त्वं ध्रुवसंलग्नां विद्युत्कुण्डलिनीं परितो धुनोति। कुण्डल्या विद्युद्धारायाञ्च ध्वन्यनुरूपः परिस्पन्दः समुदेति, विद्युच्च ध्वनिधर्मसमाविष्टा जायते। एवं ध्वन्यूर्जसो विद्युदूर्जोरूपेण परिवर्तनं निष्पद्यते।

यदा ध्वन्यनुरूपपरिस्पन्दमाना विद्युद्धारा ध्वनिश्रावकयन्त्रस्थं (Into the telephone) ध्वन्युत्तेजकयन्त्रं लभते, तदा ध्वनिधर्मसमाविष्टाया विद्युद्धाराया ध्वनिरूपेण परिणामः सञ्जायते। इयमेव क्रिया विद्युदूर्जसो ध्वन्यूर्जोरूपेण परिणमननाम्ना प्रोच्यते नूतनध्वनि-विद्भिः। एवं देहान्तरालेऽपि हृदि स्थितं सूक्ष्मवागात्मकं ज्ञानं विद्युति परिवर्त्य तद्रूपेण कण्ठादिस्थानेषु प्रेष्यते। कण्ठादिस्थानेषु च सूक्ष्मवाग्धर्मसंश्लिष्टाया विद्युतश्च कादिध्वनिरूपेण परिणामो निष्पद्यते। ततः श्रूयते क इति, ख इति। तथा चोक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—

"स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथासौ समुदीर्यते॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥"

(कारि०—११३-१४)

अत्र तेजःपदेन कायाग्नेर्ग्रहणं कर्तव्यम्। कायाग्निमेवात्र विद्युत्स्थानापन्नं जानीयात्। यतो हि प्रकाशविद्युद्दावाग्नीत्यादयः सर्वेऽग्नेरेव भेदाः, न तु तद्भिन्नाः। ज्ञानस्य एव शब्दरूपेण तत्परिणाम इत्येवं शाब्दिका मन्यन्ते। ज्ञानमप्येका ऊर्जःशक्तिर्विद्यते। सूक्ष्मशब्द-स्वरूपेण स्थितं घटपटादिविषयकं ज्ञानम् "कम्बुग्रीवादिमद्रूपार्थे घटशब्दः प्रयोक्तव्यः, पटशब्दश्च न प्रयोक्तव्यः" इत्येवं सङ्कल्पात्मकमनसा सह संयोगे सति तद्रूपेण परिणमते। "स मनोभावमापद्य" इत्यस्येदमेव तात्पर्यं विद्यते। ज्ञानञ्च सूक्ष्मवाक्स्वरूपमेव, इति

---

डायफ्राम जब ध्रुवों के पास जाता है या उनसे दूर हटता है, तो फलक्स भी बढ़ता घटता है। फलक्स के परिवर्तन के अनुरूप ही ध्रुवों पर लिपटी हुई कुण्डली की विद्युद्धारा में परिवर्तन होता है। इसीलिये जब डायफ्राम ध्वनि पड़ने से वह कम्पन करता है, तो उसी के अनुरूप कुण्डली की धारा में दोलन होता है। इस रीति से ध्वनि की ऊर्जा विद्युत की ऊर्जा में बदलती है। इसके साथ माइक्रोफोन के साथ जुटे हुए टेलोफोन की कुण्डली में धारा का दोलन होता है, तो उसी के अनुरूप डायफ्राम में कम्पन होता है जिससे ध्वनि उत्पन्न होती है।

(श्री ललित किशोर सिंह, एम. एस.सी., ध्वनिविज्ञान, पृ० २३५-२३६)

१. Flux

सूक्ष्मवाग्ज्ञानयोर्नास्ति भेदः । तथा चोक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—"अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।" इति ।

सूक्ष्मशब्दस्वरूपाया घटपटादिविषयकज्ञाननिष्ठोर्जसो मनोरूपेण परिवर्तने जाते सति मनोऽपि सूक्ष्मशब्दनिष्ठधर्मेण समाविष्टं जायते । सूक्ष्मशब्दनिष्ठधर्मसमाविष्टस्य मनसश्च कायाग्निना यदा सम्बन्धः सञ्जायते, तदा कायाग्नौ कम्पनं प्रादुर्भवति । यथा बहिःप्रदेशे दूरध्वनिप्रेषकयन्त्रे (Into the telephone) इस्पातनिर्मितेऽतीव सूक्ष्मे तन्तौ[1] यदा ध्वनिः समापतति, तदातिशयकम्पनशीलं[2] तत्त्वं पुनः पुनः सङ्कुचति, विकसति च । अतिशयकम्पनशीलनामकतत्त्वस्य सङ्कोचविकासौ ध्वन्यनुरूपावेव भवतः । येन क्रमेण ध्वनिनातिशयकम्पनशीलनामकं तत्त्वं परिकम्पते तेनैव क्रमेण कुण्डलीनिष्ठविद्युद्धारायां परिकम्पनं जायते । एवं रीत्या अन्तःकरणेऽपि विवक्षया सूक्ष्मशब्दसमाविष्टं सङ्कल्पविकल्पात्मकं मनस्तत्त्वं येन क्रमेण जठराग्निमभिहन्ति, तेनैव क्रमेण जठरनिष्ठविद्युति स्पन्दनं समुत्पद्यते । तेन सूक्ष्मध्वन्यूर्जसो विद्युदूर्जोरूपेण परिवर्तनं जायते । "स मनोभावमापद्य तेजसा पाकमागतः" इति भर्तृहर्युक्तेरिदमेवोपयुक्तं तात्पर्यं विद्यते । अन्तःकरणनिष्ठध्वनिधर्मसमाविष्टविद्युतस्तु कण्ठताल्वादिस्थानेषु अकारादिध्वनिरूपेण परिवर्तनं सञ्जायते ।

सूक्ष्मवाग्धर्मसमाविष्टमनसा जठराग्नौ कम्पने जाते सति सूक्ष्मवाचस्तेजोरूपेण यदा परिवर्तनं जायते, तदा तैजसः शब्दः प्राणवायुमाध्यमेन ऊर्ध्वं समुत्तिष्ठति । अन्तःकरणनिष्ठसूक्ष्मध्वन्यनुरूपपरिकम्पितं तेजश्च वायुस्तद्धर्मेण ( मनोधर्मेण दाहधर्मेण च ) समाविष्टः सन् ध्वनिग्राहकयन्त्रस्थानापन्नम् अनुनादकयन्त्रस्थानापन्नञ्च कण्ठताल्वादिस्थानं प्रापयति । "वायुमाविशति प्राणामथासौ समुदीर्यते" इत्यस्य चेदमेवोपयुक्तं तात्पर्यं वेदितव्यम् । कण्ठताल्वादिस्थानानि च वायुसाहाय्येन समागतं सूक्ष्मवाग्धर्मसमाविष्टेन मनसा क्रमशः प्रकम्पितं तेजस्तरङ्गमकारादिध्वनिरूपेण परिणमन्ते ।

यद्वा

"अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥"

इति भर्तृहर्युक्त्यनुसारेण अन्तःकरणतत्त्वस्याश्रयतां गतस्तद्धर्मेण सूक्ष्मवाक्संविष्टमनोधर्मेण दाहधर्मे च समाविष्टो वायुरेव ऊर्ध्वं कण्ठताल्वादिस्थानं गच्छति । कण्ठताल्वादिस्थानेष्वपि च

---

१. Diaphragm. २. Flux ।

विद्युद् विद्यते। तत्तद्वर्णाभिव्यक्तिजनककण्ठादिस्थानानि च स्वनिष्ठतेजःसाहाय्येन विद्युद्द्वारा वा अन्तःकरणात् समागतं दाहादिधर्मेण समाविष्टं वायुमकारादिध्वनिरूपेण परिणमन्ते। अन्तःकरणतत्त्वस्येत्युपर्युक्तकारिकायाः "विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः (११५)" इत्यस्याश्च कारिकाया इदमेव स्वारस्यं परिलक्ष्यते।

यथा देहाद् बहिःप्रदेशे ध्वनिग्राहकयन्त्रं ध्वनिप्रेषकयन्त्रेण प्रेषितं विद्युत्तरङ्गं प्रगृह्य स्वनिष्ठविद्युच्छक्तिसाहाय्येनैव तत्तरङ्गं ध्वनिरूपेण परिणमते, एवमन्तःकरणात् प्रेषितो दाहधर्मेण सवृत्तिकमनोधर्मेण समाविष्टो वायुतरङ्गः कण्ठताल्वादिनिष्ठतेजःसाहाय्येन ध्वनिरूपेण परिणामं लभते। ततः श्रूयते क इति, ख इति च। अन्तःकरणनिष्ठसूक्ष्मवागात्मज्ञानसमाविष्टमनोऽनुसारि प्रकम्पितं तेजः, तत्प्रकम्पितो वायुर्वा मुखे तत्तद्ध्वनिरूपं संल्लभते। यथा अस्माकं मुखात् समुद्गीर्णा वाग् ध्वन्युत्तेजकयन्त्राभिव्यक्तध्वन्यपेक्षया सूक्ष्मा, तथैवान्तःकरणनिष्ठा वाक् कण्ठताल्वाद्यभिव्यक्तध्वन्यपेक्षया सूक्ष्मा; अनुनादकयन्त्ररूपेषु कण्ठताल्वादिषु तदपेक्षया बहुगुणिता सञ्जायते। अन्तःकरणे सूक्ष्मवागात्मज्ञानस्य विद्युद्रूपेण, सूक्ष्मवाग्धर्मसमाविष्टविद्युतश्च कण्ठादिस्थानेषु ध्वनिरूपेण परिणामः सञ्जायते।

यद्वा—यथा अग्निना जलं बाष्परूपेण परिणामं लभते। बाष्पद्वारा च 'विष्टननामकं' यन्त्रं गतिमत् सञ्जायते। बाष्पस्य विष्टनयन्त्रेण संयोगे जाते सति बाष्पतत्त्वं यान्त्रिकोर्जोरूपेण विपरिणमते। यान्त्रिकोर्जसश्च विद्युदुत्पादके यन्त्रे ( Into the dynamo ) विद्युदूर्जोरूपेण, विद्युदूर्जसश्च दार्पणकुतुपान्तराले सूक्ष्मतन्तुना सह (with the filament) संयोगे जाते सति प्रकाशरूपेण परिणामः सञ्जायते। अयं विषयो डोलाण्डवारकृते "परमाणुशक्ति" इत्यमिधेये ग्रन्थे बहुशः प्रतिपादितः।

एवं सूक्ष्मवागात्मज्ञाननिष्ठोर्जसो मनसा सह संयोगे सति तस्या मनोरूपेण, मानसशक्तेश्च तेजसा सह सयोगे सति तस्याः कायाग्निरूपेण, कायाग्नेश्च प्राणवायुना सह संयोगे वायुनिष्ठोर्जोरूपेण परिवर्तनं क्रमशः सञ्जायते। सूक्ष्मवाक्संश्लिष्टमनोधर्मेण दाहधर्मेण च समाविष्टो वायुर्यदा कण्ठताल्वादिस्थानं लभते, तदा कण्ठताल्वादिनिष्ठोर्जःसहकारेण तस्य वायोर्ध्वन्यूर्जोरूपेण परिणामो भवति। ततः श्रूयते अ इति, आ इति च। यथा जलस्य क्रमशः स्वविजातीयविद्युदूर्जोरूपेण परिवर्तनम्, एवं वायोरपि कण्ठाताल्वादिरूपयन्त्रे स्वविजातीयध्वनिरूपेण परिणामो निष्पद्यते। रसायनशास्त्रदृष्ट्या भौतिकविज्ञानदृष्ट्या च वर्णाभिव्यक्तिप्रतिपादिकायाः "स मनोभावमापद्य तेजसा पाकमागतः" इत्यादिकारिकाया इत्थमेव व्याख्यानं कर्तुं शक्यते। इत्थमेव च आस्याद् वर्णा अभिव्यज्यन्ते।

वस्तुतस्तु अयं श्रोत्रग्राह्योऽकारादिशब्दो न वायोः परिणामः, न वा तैजसोर्जसः परिणामः। किन्तु शब्दस्य प्राणे बुद्धौ च या अतीव सूक्ष्मा शक्तिर्विद्यते, सा एव वक्तुर्विवक्षया कण्ठताल्वादिरूपानुनादकयन्त्रे स्वपरश्रोत्रग्राह्यस्थूलध्वन्यात्मना कादिभेदं प्रपद्यते। एतदेव श्रीभर्तृहरिचरणा अपावृण्वन् वाक्यपदीयस्य ब्रह्मकाण्डे—

"तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥" इति।
( कारि०–११७ )

यत्तु पूर्वं ध्वन्यभिलेखनयन्त्रस्य ( of the phonograph ) दृष्टान्तद्वारा वायोः परिणामभूतः शब्दः प्रतिपादित इति, तन्न समीचीनम्; ध्वनिपेटिकायां ( Into the sound box ) ध्वनिपेटिका वायुं प्रपूर्य मण्डलकोपरि ( on the record ) संश्लिष्टां सूचिकाञ्च सन्निधाप्य मण्डलकंयन्त्रद्वारा यदा परितो भ्राम्यति, मण्डलकस्य-परिभ्रामणेन ध्वन्यनुरूपेषु उच्चावचगर्तेषु सूचिकाया आघातः सञ्जायते। मण्डलकनिर्मित ध्वनिगर्त-सूचिकयोश्च परस्परमाघाताव्यवहितोत्तरं घटपटादयोऽतीव सूक्ष्मा ध्वनय एव समुत्पद्यन्ते। ते एव ध्वनयो ध्वन्युत्तेजकयन्त्रं गतास्तारस्वरेणास्माभिः श्रूयन्ते। न च 'ध्वनिगर्त-सूचिकयोः परस्परं संघर्षे सति अतीव सूक्ष्मो घटपटादिध्वनिरेवाभिव्यज्यते' इति मया स्वीक्रियते। त्वया तु 'सूचिकायां ध्वनिगतानुरूपं कम्पनं प्रादुर्भवति, तत्कम्पनमेव ध्वन्यभिलेखनयन्त्रस्थं वायुम् आत्मसात् कुर्वद् ध्वन्युत्तेजकेन तारस्वरेण श्रूयते' इत्येवं स्वीक्रियते।

आवयोः पक्षयोर्विनिगमनाविरहात् किमपि तथ्यं याथार्थ्यं न भजतीति वाच्यम्! सत्कार्यवादिमतानुसारेण तत्समाधानात्। सत्कार्यवादिनः कार्यस्याभिव्यक्तेः पूर्वमेव कारणे तत्सत्तां स्वीकुर्वन्ति। अण्डेषु यद्वा बीजेषु लीयमानानि सूक्ष्माण्यङ्गान्येव बहिः स्थूलरूपेण अभिव्यज्यन्ते। बीजे सूक्ष्मरूपेण शाखापल्लवादीनां सत्ताया अभावे स्थूलवृक्षस्य समुत्पत्ति-रसम्भवा। एवं ध्वन्यभिलेखनयन्त्रेऽपि ध्वनिगर्त-सूचिकयोराघाते सति प्रथमं घटपटाद्यात्मकः सूक्ष्मो नादः समुदेति। स एव नादो ध्वन्युत्तेजकयन्त्रेण तारस्वरेण श्रूयते। यदि मूले सूक्ष्म-घटपटाद्यात्मकस्य ध्वनेरभिव्यक्तिर्न स्यात्, तर्हि तस्य स्थूलध्वन्यात्मना श्रुतिरसम्भवा। किञ्च, 'यत्र यत्र ध्वनिस्तत्र तत्र कम्पनम्, यद्वा यत्र यत्र कम्पनं तत्र तत्र ध्वनिः, ध्वनिः पिण्डस्य कम्पनात् प्रादुर्भवति, यथा नानद्यमानायां घण्टायाम्' इत्येवं प्रत्यक्षप्रमाणीकृतानुमानेन यदि मण्डलकोपरि सूचिकायामाघाते सति कम्पनं प्रादुर्भवति, तर्हि तत्र सूक्ष्मा घटादयो ध्वनयोऽपि अवश्यमेव अभिव्यज्यन्ते। मूलभूताः सूक्ष्मा ध्वनय एव बृहद्ध्वनिरूपेण श्रूयन्ते। एवंरीत्या

विचार्यमाणे सति ध्वन्यभिलेखनयन्त्रे मण्डलकोपरि सूचिकया शब्द एवाभिव्यज्यते, न तु ध्वनिगर्तानुरूपपरिकम्पितसूचिकास्पन्दनानुरूपवायवीयतरङ्गा ध्वनिरूपेण परिणताः श्रूयन्ते ।

किञ्च ये ज्ञानस्य शब्दत्वापत्तिमामनन्ति, तेषामपि मतानुसारेण बीजे महीरुह इव ज्ञाने सन्निहिता सूक्ष्मा वागेव स्थूलध्वन्यात्मना अभिव्यज्यते । अत एव भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥

( कारि०–११२ )

इत्यस्यां कारिकायाम् "सूक्ष्मवागात्मना स्थितः" इत्युक्तम् ; न तु केवलं ज्ञानमात्रं शब्दात्मना आविर्भवति । सूक्ष्मवागात्मना स्थितं घटपटादिविषयकं ज्ञानमेव स्थूलनादात्मना बहिरभिव्यज्यते । ज्ञानस्वरूपया सूक्ष्मवाचो ध्वनिरिन्द्रियातीतः, अतः सा सूक्ष्मा । स्थूलायाश्च वाचो ध्वनिः श्रोत्रेण गृह्यते । अतः सा स्थूला । स्थूलयापि वाचा घटपटादिविषयकं ज्ञानं जायते । अतः सापि तादात्म्याद् ज्ञानस्वरूपा ।

यत्तु विजातीयरूपेण पदार्थस्य परिवर्तनं प्रतिपादयन् जलस्य विद्युद्रूपेण परिवर्तनं दृष्टान्तरूपेण समुपस्थाप्य नादशून्यस्य ज्ञानस्य ध्वनिविशिष्टशब्दात्मना परिणतिः पूर्वं प्रतिपादिता, सापि न समीचीना । सत्कार्यवादिमतानुसारेण विद्युद्रूपकार्यस्याभिव्यक्तेः पूर्वमेव जले सूक्ष्मरूपेण विद्युतः समुपस्थितेः सत्त्वात् । जले सन्निहितमग्नितत्त्वमेव यान्त्रिकक्रियया विद्युदात्मना अभिव्यज्यते । जलेऽग्नितत्त्वस्यानुसंसर्गः सांख्यैः स्वीक्रियते । तथा चोक्तं श्रीमद्भागवते तृतीयस्कन्धे—

भूतानां नभआदीनां यद्यद्भव्यावरावरम् ।
तेषां परानुसंसर्गाद् यथासंख्यं गुणान् विदुः ॥

(भा०, स्क० २, अ० ५, श्लो० ३६)

वायौ आकाशस्य, अग्नौ च आकाशवायुतत्त्वयोः, जले च आकाशवाय्वग्नितत्त्वानाम्, पृथ्व्याञ्च नभआदीनां चतुर्णामनुसंसर्गोऽस्ति । पृथ्व्यादिष्वग्नितत्त्वस्य सत्त्वादेव काष्ठद्वयस्य परस्परं संघर्षणेन अग्निः प्रज्वलति । इममेव सत्कार्यवादं स्पष्टयति श्रीभर्तृहरिर्वाक्यपदीयस्य ब्रह्मकाण्डे—

अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥

( कारि०–४६ )

यथा अरणिस्थं ज्योतिः प्रकाशान्तरस्य बहिर्दृश्यमानस्याग्नेः कारणम्, तथैव बुद्धिस्थो बुद्धौ सूक्ष्मरूपेण स्थितोऽक्रमिकश्च शब्द एव श्रुतीनां श्रूयमाणशब्दानामुपादानं कारणम्। उपदेशकाले शैशवावस्थायां वृद्धैर्ये घटपटादयः सक्रमाः शब्दाः समुपदिष्टाः, त एव शब्दाः श्रोत्रद्वारा शिशोर्बुद्धिदेशं प्रविश्य अक्रमिकरूपेण तत्र तिष्ठन्ति । विवक्षया शिशुर्वृद्धैः समुपदिष्टान् विच्छिन्नक्रमरूपान् बुद्धिदेशं गतान् तानेव शब्दान् पुनः 'घटः, पटः' इत्येवं सक्रमरूपेण समुच्चारयति । एतदेव स्पष्टीचकार श्रीभर्तृहरिः—

यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥
( ब्रह्म० ५२ )

यथैकबुद्धिविषया मूर्तिः चित्रपटे निर्मीयते । 'एकबुद्धिविषया' इत्यस्याक्रमिकरूपेण बुद्धौ स्थिता मूर्तिः । बहिःस्थिता मूर्तिः पूर्वं सक्रमरूपेण चित्रकारस्य बुद्धौ समाविशति । बुद्धिदेशं समाविष्टा च तत्र विच्छिन्नक्रमरूपेण तिष्ठति । अक्रमिकां बुद्धिदेशस्थितामेवमूर्तिं पुनश्चित्रफलके क्रमरूपेण निर्माति । एवं पूर्वं सक्रमः शब्दो बुद्धिदेशं समाविश्य तत्र अक्रमतां लभते । स एव शब्दो विवक्षायां सत्यां पुनः सक्रमरूपं लभते ।

यथा ध्वनिप्रेषककेन्द्रस्थानात् प्रसारयिष्यमाणः संवादविसंवादो ध्वन्युत्तेजकयन्त्रस्य पुरःसरं प्रोच्चरितः, तत्र ( ध्वन्युत्तेजकयन्त्रे ) विद्युद्गतिं लब्ध्वा ध्वनिवर्धकयन्त्रेण च सम्वर्द्धितः सन् ध्वनिग्राहकयन्त्रस्य तरङ्गेण समन्वितो भूत्वा ( Modulated with the radio frequency ) वायवीयं ( Into the arial ) प्रविशति, तच्च वायवीयं विद्युच्चुम्बकीयतरङ्गद्वारा सर्वतो दिक्षु तं संवादविसंवादं प्रेषयति । विद्युच्चुम्बकीयतरङ्गसहकारेण विप्रकृष्टदेशेषु, यद्वा अनतिदूरदेशेषु गृहे वने वा स्थितेषु ध्वनिग्राहकयन्त्रेषु ( Into the radio ) ध्वनयः समाविशन्ति । तत्र विद्युद्ध्वनितरङ्गयोः पृथक्कर्तृयन्त्रं विद्युतो ध्वनिं पृथक्कृत्य ध्वनिग्राहकयन्त्रस्थं ध्वन्युत्तेजकनामकं भागं प्रवेशयति । ततस्त एव ध्वनिप्रेषककेन्द्रस्थानात् प्रेषिता ध्वनयः श्रूयन्ते न तु तद्भिन्नाः ।

एवंरीत्याऽन्तःकरणेऽपि प्राणस्था बुद्धिस्था च वाग् वक्तुर्विवक्षया कायाग्निसन्तप्तवायुमाध्यमेन अनुनादकयन्त्रस्थानापन्नं ताल्वादिस्थानं लभते । ताल्वादिस्थानञ्च तेजःसन्तप्तप्राणवायुतः शब्दं पृथक्कृत्य तमभिव्यनक्ति । ततः श्रूयते अ इति, आ इतीति ।



# उत-निपातस्यार्थविज्ञानम्

श्रीहरिश्चन्द्रमणित्रिपाठी
अनुसन्धाता
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

यदा काचनापि भाषा दैनिकव्यवहारे प्रयुज्यते, तदा सा स्वभावतः प्राणवती गतिशालिनी च भवति। वेदसंहिताब्राह्मणारण्यकप्रातिशाख्यरामायणमहाभारततश्चतुर्थशताब्दीपर्यन्तनिर्मितसंस्कृतवाङ्मयं यावत् संस्कृतभाषा कामं प्राणवती गतिशीला चासीत्। जीवनस्य प्रत्येक व्यवहारे इयं प्रयुज्यमानासीत्। अत एवास्या अत्यन्तं सारल्यं बोधगम्यत्वञ्चासीत्। भाषा यदा प्राणवती भवति, तदा तस्या वाक्येषु क्रियापदानाम्, अर्थात् विधेयदलस्य बाहुल्येन प्रयोगा भवन्ति; यतो हि भाषायाः स्वाभाविकविकासदशायामसमस्तानां पदानामेव प्रयोगो भवति। अस्याञ्च दशायां समस्तपदानां प्रयोगस्यावकाश एव न भवति, यतो हि भाषा जीवनगत्या सह सम्बद्धा भवति जीवनस्य स्वाभाविकगत्या सह दुरूहतायाः सङ्गतिर्न भवति। इयमेव दशा संस्कृतभाषाया अभूत्।

वैदिकसंहितातश्चतुर्थी शताब्दीं यावत् संस्कृतभाषा जीवने व्यवह्रियमाणासीत्। अतोऽत्र समस्तानि पदानि न प्रयुज्यमानानि आसन्। अस्यां दशायामसमस्तानां पदानां क्रियापदानाञ्च अर्थाद् विधेयदलस्य बाहुल्येन प्रयोगा भवन्ति। यतो हि विधेयमेव वाक्ये प्रधानं भवति, उद्देश्यदलन्तु विशेषणकोटिमारोहति। विशेषणतया प्रयुज्यमाना पदार्था अनुवादवद् भासन्ते। ज्ञातमेवोद्देश्यदलं भवति, अज्ञातञ्च विधेयदलं भवति। यदा उद्देश्यदलस्य बलेन विधेयदलं ज्ञानविषयीक्रियते, तदा क्रियापदं पूर्णतया अर्थं प्रकाशयितुमसमर्थं भवति। अस्याञ्च दशायां क्रियापदेन सह निपातविशेषा उपसर्गादयः संयोज्यन्ते। संयुज्यमानाश्च तेऽभीष्टमर्थं भावञ्च प्रकाशयन्ति।

उपर्युक्तेन सन्दर्भेणायमेव निष्कर्षो भवति यत् संस्कृतभाषायां क्रियापदानां यावद् विशिष्टं स्थानं भवति ततो मनागपि न्यूनं निपातानां स्थानं नास्ति। निःसंशयं वक्तुं शक्यते यत् संस्कृतभाषाया यदि क्रियापदं शरीरस्थानीयम्, तर्हि निपाताः प्राणस्थानीयाः।

अतोऽत्र कतिपयनिपातानां विभिन्नार्थेषु प्रयुक्तानामुदाहरणानि प्रदर्श्यन्ते। प्रथमं तावत् 'उत' इति निपातस्योदाहरणं प्रस्तूयते।

तथा हि "भद्रं नो······मुत क्रतुम् ।"[१] अत्र 'उत'पदमप्यर्थे प्रयुक्तमस्ति। तथा च सायणः—"उत अपि च, क्रतुं प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय।" अन्यत्रापि सायणाचायण तस्मिन्नेवार्थे 'उत'पदं प्रयुक्तम्[२] । अन्यत्र तु 'उत'पदं सायणाचार्येण चार्थे प्रयुक्तम्। तथा हि "परैतु ·····मोत वीरान् स्वाहा।"[३]

'उत'पदं परामर्शेऽप्यर्थेऽवलोक्यते, "सोमस्त ··उ० द्युम्नस्य"[४] । तथा हि "उत-शब्दः परामर्शे" इति भट्टभास्करभाष्यम्।

निपातानामनेकार्थत्वाद् विकल्पार्थेऽपि क्वचित् उत'शब्दो दृश्यते। तथा च "अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत"[५] । अत्रोपोद्बलकतया सायणभाष्यमुद्ध्रियते—"उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धः, तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम्। तर्हि निपाता आद्युदात्ताः (फि० सू० ८० ) इत्युकारस्योदात्तः प्राप्त इति चेन्न, प्रातः शब्दवदन्तोदात्तत्वात्। यथा 'प्रातः' शब्दोऽन्तोदात्तत्वेनैव स्वरादिषु (पा० सू० १।१।३७) पठितः, एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात्" इति।

वेदे उतपदं विचिकित्सायां निभाल्यते। तथा च मन्त्रः—"उत स्वया सुमनाः······ अभिख्यम्"[६] । अत्र सायणाचार्येण उतपदं विचिकित्सार्थे प्रयुक्तम्—"उतेति विचिकित्सायाम्। उत किं स्वया तन्व्या स्वीयेन आत्मीयेन शरीरेण संवदे सह वदनं करोमि, आहोस्वित् तत्तेन वरुणेन सह संवदे" इति।

तैत्तिरीये आरण्यके 'उत'शब्दः किंशब्दार्थेऽपि दृष्टः। तथा च मन्त्रः—"उता-विद्वानमुं लोकं······कश्चित्समश्नुता उत"[७] । अत्र सायणः—"उतशब्दः प्रश्नद्योतकः, किमित्येतस्मिन्नर्थे वर्तते"। तैत्तिरीये आरण्यके 'एव' अप्यर्थेऽपि 'उत'शब्दो वर्तते। तथा हि—"मा नो महान्तमुत······रीरिषः"[८] । अत्र सायणाचार्यः—"उतशब्दा अपि पर्याया उक्तानुक्तसमुच्चयद्योतकाः" इति।

---

१. ऋ० सं० १०।२५।१।
२. ऋ० सं० १०।७२।४।
३. छा० ब्रा० २।१।२५।
४. तै० सं० १।११।६२।
५. ऋ० सं० १।१।२।
६. ऋ० सं० ७।८६।२।
७. तै० आ० ८।२।६।
८. तै० आ० ३।५२।५२।

अथर्ववेदे उतशब्दः अप्यर्थे समुच्चयार्थे । तथा च मन्त्रः—"यदन्तरिक्षं पृथिवी-मुत·· ··लोकम्"[१] । अत्रापि सायणाचार्येण उतशब्दः समुच्चयार्थे व्याख्यातः । तथा हि "उतशब्दः अप्यर्थे समुच्चयार्थे वर्तते ।"

'उत' इति निपातश्चार्थे ऋग्वेदे—"मा काकम्बीरमुद् ····मोत सूरो अहः"[२] इति मन्त्रे प्रयुक्तः । तथा च स्कन्दस्वामिनः उद्गीथभाष्यम्—"उतशब्दोऽत्र चार्थे" । ऋग्वेदे पदपूरणार्थोऽपि उतशब्दो दृश्यते । तथा च मन्त्रः—"परो हि मर्त्यैरसि समो देवैरुत"[3] । तथैव उद्गीथभाष्यम्—"उतशब्दस्तु पदपूरणः" । "उत ब्रुवन्तु नो मिदो······इद् दुवः[४]" इति मन्त्रेऽपि पदपूरणार्थकोऽपि अप्यर्थकः समुच्चयार्थकश्च उतशब्दः प्रयुक्तः । तथैव उद्गीथ-भाष्यम—"उतशब्दः पदपूरणः, अप्यर्थे, समुच्चये वा"[५] इति ।

'यस्मात्' इत्यर्थेऽपि क्वचिद् ऋग्वेदे उतशब्दो निपात्यते । यथा —"तस्मिन् सखित्व ·········स शक्र उत नः"[६] । उद्गीथभाष्यमपि तथैव समर्थयामास—"उतशब्दस्तु यस्मादर्थे ।"

पदपूरणे प्रयुज्यमानः उतशब्दः स्वार्थेऽपि दृश्यते । तथा च मन्त्रः—"अप्स्वन्तर-मृतमप्सु भेषजमपामुत[७] ··· ···।" उद्गीथभाष्यमप्येतत्समर्थयते । यथा हि—"उतशब्दः पदपूरण एवार्थे वा ।"

अयमुतनिपातो निपातान्तरेण सह प्रयुज्यमानोऽर्थान्तरमपि गमयति । यथा—"उतो स मह्यमिन्दुभिः··· ····षड् चर्कृषत्"[८] अस्मिन् मन्त्रे उञा सह कृतैकादेशः 'उतो' शब्दः पदपूरणार्थकः प्रयुज्यमानो दृश्यते । 'उ' इति निपातो नाम्ना सह, उपसर्गेण वा सह आख्यातेन वा सह कृतैकादेशः सन् प्रयुज्यमानो विभिन्नेष्वर्थेषु दृश्यते । तथा हि—"उतो इत्युतशब्दस्योञा सहैकादेशः उत + उ = उतो. 'उ' इत्युञ् चायं नाम्ना वा सह कृतैकादेशः[९]—"एषो उषाः" (ऋ० १।४६।१), "सो चिन्नु" (ऋ० १।१६१।११), "चत्तो इतः" (ऋ० १०।१५५।२) इति यथा । आख्यातेन वा सह—"जनिष्टो अपः" (ऋ०

१. अ० वे० ११९।३।१ ।
२. ऋ० सं० ६।४८।१७ ।
३. ऋ० सं० ६।४८।१९ ।
४. ऋ० सं० १।४।५ ।
५. "उत-चार्थे" इति टिप्पणी ( ऋ० सं० १।४।५ ) ।
६. ऋ० सं० १।१०।६ ।
७. ऋ० सं० १।२३।१९ ।
८. ऋ० सं० १।२३।१५ ।
९. "उतो शब्दस्योञा सह एकादेशः उतो इति । उञ्द्वयं नानावत् कृतसहैकादेशः" इति ( टिप्पणी, ऋ० वे० उद्गीथभाष्ये–१।२३।१५ ) ।

१०।६५।१० ), इति यथा[1]। उपसर्गेण वा सह—"प्रो आरत" ( ऋ० सं० १।३९।५ ), "उपो रथेषु" ( ऋ० १।३६।६ ) "अपो सुम्यक्ष" ( ऋ० सं० २।२८।६ )। इति यथा। निपातेन वा सह—"अथो वयम्" ( ऋ० सं १।१६४।४० ), "नो वयम्" ( ऋ० सं० १।१६१।१० ), "उतो न्वस्य" ( ऋ० सं० ८।७२।६ ), "मो ष्वन्यत्र" ( ऋ० सं० ७।५६।५ ) इति यथा। स सर्वः पदपूरणोऽपृथगर्थत्वाच्च कृतैकादेशः। उञ्पदकारेण पूर्वेण पदेनैकीकृत्यैव पठितः। इति करणोपादानात्तु प्रगृह्यतां दर्शयता दर्शितो बोद्धव्य इति।[2]

शुक्लयजुर्वेदे उतशब्दः अप्यर्थे प्रयुक्तो अखिलक्ष्यीक्रियते। तथा हि मन्त्रः— "द्युभिरस्तुभि ·· ··· सिन्धुः पृथिवी उत द्यौः"[3]। 'अदितिश्च सिन्धुश्च पृथिवी च उत—अपि च द्यौः' इति उव्वटाचार्यः। 'सिन्धुः समुद्रः, उत = अपि च द्यौः' इति महीधराचार्यः।

उतोशब्दोऽपि स्वातन्त्र्येण प्रयुक्तस्तैत्तिरीयसंहितायाम् अप्यर्थे दृश्यते। तथा च मन्त्रः—'नो मर्धीरा ···उतो न उत्पुपूर्या"[4]। 'उतोशब्दः अपि च इत्यर्थकः', इति भट्टभास्करभाष्यम्।

उतशब्दो वार्थेऽपि दृष्टः। यथा—

कोऽयं कस्य कुतो वायं किं निमित्तमिहागतः।
कथं त्वया सहानेन संवादः कृत इत्युतः ॥[5]

अत्र 'उतशब्दो वाऽर्थे' इति गोविन्दराजीयभूषणटीकायाम्। अधिकेऽर्थे अप्यर्थे चापि अयं निपातः प्रयुज्यते। यथा—

उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित्।
आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः ॥[6]

---

१. "उपसर्गेण—प्रो, अपो, ओ, उपो। निपातेन—अथो, नो, उतो, मो इति। सर्वः पादपूरणः अपृथगर्थत्वाच्च। कृतैकादेशः 'उञ्' पदकारेण एकीकृत्यैव पठितः।" इति ( टिप्पणी, उद्गीथभाष्ये, ऋ० वे० १।२३।१५ )।

२. ऋ० सं० १।२२।१५, उद्गीथभाष्यम्।

३. शु० य० ३४।३०।

४. तै० सं० २।१२।७०।

५. वा० रा० सु० ४२। ६।

६. म० भार०-शा० २६२ ( ९० ) ३८।

"अत्र एकः उतशब्दोऽधिकविवक्षायाम्, अन्योऽप्यर्थे" इति नीलकण्ठः। 'तु' इत्यर्थेऽपि अयं शब्दः प्रयुक्तो दृश्यते। यथा "स यदजया··· त्वमुत जहासि······।"[१] "त्वमुत त्वन्तु, अत्र उतशब्दः त्वर्थे वर्तते" इति श्रीधराचार्यः। अयम् उतशब्दः एवार्थेऽपि दृश्यते। यथा "तव परि ये ···त उत··· ये विमुखाः"[२]। "अत्र उतशब्दः एवार्थे" इति श्रीधराचार्यः।

अपि शब्दार्थेऽपि दृश्यते अयम् उतनिपातः। यथा–'उत त्वः पश्यन्न ददर्श······ सुवासाः"[३]। "उत त्वः-अपि खल्वेकः" इति महाभाष्यम्[४]। "उतशब्दो अपि शब्दस्यार्थे। स च भिन्नक्रमः प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थपरिज्ञानान्न पश्यतीत्यर्थः। उतो इति–उत उ इति निपातसमुदायः।" इति प्रदीपः।[५]

"भाष्ये एकशब्दोऽन्यवाची। भाष्येऽपि खल्विति प्रसिद्धिद्योतकम्। नन्वपिशब्दार्थोत-शब्दस्यान्यशब्दार्थत्वशब्देनान्वये वैयर्थ्यम्, पश्यन्नपीति भाष्यानार्जवं चात आह–अपि शब्दार्थ उतशब्दः, पश्यन्नपि शृण्वन्नपीत्यन्वेतीत्यर्थः। 'उत, उ' इति निपातद्वयसमाहारस्त्वर्थ इत्यर्थः।"[६]

अपिशब्दपर्यायोऽपि उतशब्दोऽतिशयेऽर्थे गीतायां दृश्यते। तथा हि—

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥[७]

तथा च आनन्दगिरिः— 'उतशब्दोऽपि शब्दपर्यायोऽप्यतिशयार्थः'।[८] अस्मिन्नेव श्लोके अप्यर्थकः उतशब्दो व्यङ्कटनाथब्रह्मानन्दगिरिणापि प्रतिपादित इत "उतशब्दात् सुखादिलिङ्गेनापि जानीयादित्युक्तं भवति"[९]। तत्रैव वल्लभचार्यो हि उतशब्दश्चार्थे व्याख्यात-वान् 'उतशब्दश्चार्थे लिङ्गेनेह विजानीयादित्युक्तम्।"[१०] इति।

---

१. श्रीमद्भा० १०।२५।३८।
२. श्रीमद्भा० वेदस्तुतिः, १०।१४।२७।
३. ऋ० सं० १०।७१।४।
४. महाभाष्यम्, पस्प०, पृ० २३।
५. महाभाष्यम्, पस्प०, पृ० २३।
६. अन्नम्भट्टकृतमहाभाष्यटीका, पस्प०, पृ० २८।
७. गीता, १४।११।
८. आनन्दगिरिशाङ्करभाष्यव्याख्यानम्, गीता १४।११।
९. व्यङ्कटनाथब्रह्मानन्दगिर्याख्यानम्, गीता १४।११।
१०. श्रीवल्लभाचार्यतत्त्वदीपिका, गीता १४।११।

उतशब्दः अथवार्थे कालिदासेन प्रयुक्तो दृश्यते । तथा च रघुवंशमहाकाव्यम्—

न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्त्रिणा हन्मि लोकमुत ते मखार्जितम् ॥[१]

"किं त्वनेन पत्त्रिणा-शरेण ते गतिं गमनं हन्मि, उत–अथवा मखार्जितं लोकं हन्मि, शंस ब्रूहि ।" इति मल्लिनाथः । अनेन मल्लिनाथीयव्याख्यानेन स्पष्टं भवति यद् उतशब्दः अथवार्थ एव । तमेवार्थमादाय श्लोकप्रतिपाद्यार्थस्य सङ्गतिर्भवति ।

मालतीमाधवेऽपि भवभूतिना निश्चये, वितर्के वार्थे प्रयुक्तः । तथा च श्लोकः—

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स हि नो नन्दन इति ॥[२]

अस्मिन् श्लोके प्रयुज्यमानस्य उतशब्दस्य निश्चयोऽप्यर्थः, वितर्कोऽयर्थश्च सङ्घटेते । उभयथापि प्रतिपाद्यस्य विषयस्य सङ्गतिर्भवति । तथा च तद्व्याख्याता जगद्धरः—"उत निश्चये, वितर्के वा । 'उत निश्चयवितर्कयोः' इति धरणिः ।"

भवभूतिनाथवार्थे प्रयुज्यमानः उतशब्दः उत्तररामचरिते दृश्यते । तथा हि—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद् गुरुतां दधानो
वीरो रसः किमयमित्युत दर्प एषः ॥[३]

'उत अथवा' इति जीवानन्दः ।

मृच्छकटिके उतशब्दो विचिकित्सायां दृश्यते । तथा च–"समासोऽयं सन्धिः······ इदानीं परीक्षे किं लक्ष्यसुप्तम्, उत परमार्थसुप्तमिदं द्वयम् ।'[४] अत्र "उतशब्दो विचिकित्सायां वर्तते" इति पृथ्वीधराचार्यः ।

१. रघुवंशमहाकाव्यम्, ११।८४ ।
२. मालतीमाधवम्, २।७ ।
३. उत्तररामचरितम्, ६।१९ ।
४. मृच्छकटिकम्, ३, पृ० ८६, प्रकाशितं निर्णयसागरमुद्रणालये ।

उतशब्दः अप्यर्थे, समुच्चयार्थे विकल्पार्थे, प्रश्नार्थे, वितकार्थे, अवधारणेऽर्थे च वर्तते। तथा चामरकोषः—"प्रतीच्यां चरमे पश्चादुता ...,"।[1]

अप्यर्थसमुच्चयः प्रश्नश्च विकल्पो भेदः पक्षान्तरं वा अनयोः 'उत' स्यात्। 'ऊयते स्म', 'उङ् शब्दे' अस्माद् भौवादिकात् कर्मणि 'क्ते' उत। उतापी द्वौ च बाढार्थौ' इत्यजयः।

(क) समुच्चये यथा—उतार्जुनो भीमो रणे गमिष्यतः।

(ख) विकल्पे यथा—विष्णुरुत शिवः सेवनीयः।[2]

केचित्तु उतशब्दोऽवधारणेऽपि भवतीति पठन्ति।[3] प्रश्नोद्घाटने उतशब्दो जैनेन्द्रव्याकरणे दृश्यते। तथा च सूत्रम् 'उताप्योः पृष्टोक्तौ लिङ्'। 'उत', 'अपि' इत्येतयोर्वाचोः पृष्टस्योक्तौ गम्यमानायां लिङ् भवति। यथा—किमकार्षीः कटं देवदत्तेन ? इति पृष्टः प्रत्याह–उत कुर्यात्—कटं कृतवानित्यर्थः। पृष्टोक्तौ किम् ? उत दण्डः पतिष्यति। अत्र प्रश्नोदघट्टनं च प्रतीयते।[4]

'बाढम्' इत्यर्थेऽपि उतशब्दः पाणिनीयव्याकरणे दृश्यते। तथा च सूत्रम्—"उताप्योः समर्थयोर्लिङ्"[6]। बाढमित्यर्थेऽनयोस्तुल्यार्थता। यथा—उत अपि वा हन्यादघं हरिः ? समर्थयोः किम् ? उत दण्डः पतिष्यति।[7]

उतशब्दः प्रश्ने, विकल्पे, वितर्के, समुच्चये, चार्थे प्रयुज्यमानो बहुत्र दृश्यते। क्रमेणात्रोदाहरणानि प्रदर्श्यन्ते। 'उत प्रश्नवितर्कयोः समुच्चये विकल्पे च।'[8]

यथा—प्रश्ने (क) स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्। (कुमारसंभवम्)

(ख) तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते। (शाकुन्तलम्)

वितर्के –

किं देवी स्वयमागता मुररिपोर्देवस्य वक्षःस्थलात्।
कूपात् पत्युरुतावतारमकरोद् देवी भवानी स्वयम्॥

---

१. अमरकोषः, ३।२५२।

२. अमरकोषस्य रसाला व्याख्या, ३।२५२।

३. त्रिकाण्डशेषकोषः, ३।४।

४. जैनेन्द्रव्याकरणम्, २।३।१२८।

५. जैनेन्द्रमहावृत्तिः, २।३।१२८।

६. पा० अ० ३।३।१५२।

७. पा० अ० ३।३।१५२, भट्टोजिदीक्षितः।

८. रूपमालायामव्ययार्थे, ३८।

विकल्पे—(क) एकमेव वरं पुंसामुत राज्यमुताश्रमः ।

(ख) यदक्रन्दः प्रथमं जायमान उद्यनत् समुद्रादुत वा पुरीषाम् ।[१]

समुच्चये —(क) 'शौर्यगाम्भीर्यमौदार्यदाक्षिण्यमुत विक्रमः ।'

(ख) मानाग्निहोत्रमुत मानमौनम् ( भा० आ० ३६२ )

अयमुतशब्दो वाचस्पत्याभिधाने[२] अत्यर्थेऽपि दृश्यते । यथा—'वीरो रसः किमयमित्युत दर्प एषः' । क्वचिद्[3] वाक्यार्थेऽपि उतशब्दोऽवलोक्यते । यथा—'अयि क्षुभ्यद्गदन्तः परिणत उत पर्वतं भिन्द्यात् ।'

अयमुतनिपातोऽनेकार्थानभिव्यनक्ति, यथा—सन्देहः, अनिश्चयः, अनुमानम्, विकल्पः । किंशब्देन सह प्रयुक्तस्य तस्य परस्परं सम्बन्धोऽप्यर्थः । उतशब्दः आहो—आहोस्वित्—स्वित्-इत्येतैर्निपातैः सह सम्बद्धः सन् प्रयुक्तो दृश्यते । अयञ्च उतशब्दो यदा कदाचिच्चार्थे, एवार्थे च प्रयुज्यते । उतशब्दात् प्रश्नार्थकस्य वाक्यस्याप्यभिव्यक्तिर्भवति । उतशब्दो वितर्केऽर्थेऽपि, अत्यर्थेऽपि च क्वचित् प्रयुज्यते । कदाचिद् उतशब्दः पदपूरणेऽपि अवलोक्यते । प्रतिपूर्वः प्रयुक्त उतशब्दः कदाचित् विरुद्धार्थं गमयति ।[४]

---

१. यजु० सं० २९।१२ ।

२. वाचस्पत्यम् ।

३. निपाताव्ययोपसर्गवृत्तिः, निपातकाण्डम् ४७ ।

४. 'उत'—Ind. 1A. Particle expressing—(a) Doubt, uncertainity, guess (or). तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते । ( S 3 ); 'स्थाणुरयमुत पुरुषः' ( G. M. ); 'वीरो रसः किमयमित्युत दर्प एषः' ( Veeracharitam. )

(b) Alternative usually a correlative of 'किं' ( whether, or ), 'किमिदं गुरुभिरुपदिष्टमुत धर्मशास्त्रेषु पठितमुत मोक्षप्राप्तियुक्तिरियम्' K. 155 ); 'किं येन सृजति व्यक्तमुत येन बिभर्षि तत्' ( Ku. 6. 23 ). The place of 'उत' is also taken by आहो or आहोस्वित्; sometimes आहो, आहोस्वित् or स्वित् are joined with 'उत' ।

(c) Association, sometimes ( having a cumulative force—'and', 'also' )—उत बलवानुताबलः ।

(d) Interrogation; उत दण्डः पतिष्यति ?

(e) Deliberation,

(f) Intensity,

(g) Wishing : especially at the beginning of a sentence followed by a potential 'would that'.

यदा सम्बद्ध उतशब्दो वाक्यार्थनिर्देशे, पराशयप्रकाशनार्थे प्रयुज्यमानो लक्ष्यते। यथा—'यदुत पराशयप्रकाशनादौ'[१] इति। 'यदुत वाक्यार्थनिर्देशे'[२]।
यथा—'वाच्योऽसौ यदुत ग्रामं गच्छ।' किमा च सम्बद्धः उतशब्दः प्रश्ने, वादे, विकल्पे, अतिशये, वाऽर्थेऽपि च प्रयुज्यते। यथा—'किमुत प्रश्नवादयोः विकल्पेऽतिशयेऽपि वा'।[3]

प्रश्ने—(क) प्रहरविरतौ मध्ये चाह्नस्तपोऽपि परेण वा।
किमुत सकले याते चाह्नित्वमद्य समेष्यति॥

वादे— नित्यः शब्दः किमुतानित्यः ?

विकल्पे— किं वा विद्याधरोऽयं किमुत सुरपतिः।

अतिशये यद्वास्यमप्यस्य लमेत नारी
सा स्यात् कृतार्था किमुताङ्गशय्याम्।

प्रतिना च सम्बद्धः उतशब्दः वैपरीत्येऽर्थे प्रयुज्यते। प्रति+उत=प्रत्युत, द्वन्द्वः। स्वपक्षस्थापनाथापरपक्षनिराकरणाय वा उक्तस्य तद्वैपरीत्यभावे। वैपरीत्यमात्रे च

---

(h) Sometimes used as an explative.

(i) Oft. used for the sake of emphasis especially at the end of a line after इति or a verb; 'तदा विद्याद्विवृद्धं सत्त्वमित्युत' (Bg.19.11) 'नष्टे धर्मे कुलं कृत्स्नमधर्मोऽभिभवत्युत' (Bg. 1.40.).

(२) With a preceding 'प्रति' = on the contrary, on the other hand; but सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः' ( Si. 2.55 ). 'न केवलं भ्रियते प्रत्युत पर्युपास्यमानस्तिष्ठति' ( Nag. 5 ).

(३) With a preceding, 'किं'=how much more or how much less; see किम्+उत=किमुत either—or; 'एकमेव वरं पुंसामुत राज्यमुताश्रमः' ( G. M. ); 'उत वा' or else, and; 'वा, 'उत वा', 'उताहो', 'वा', 'अपि वा' either-or; आहो, आहोस्वित used for the sake of emphasis; उता हो हतवीर्यास्ते बभूवुः पृथिवीक्षितः' ( Ram. 7. 31. 4 ); 'शालिहोत्रः किन्नु स्यात उताहोस्वित राजानलः।' इति। ( Sanskrit-English Dictionary by V. S. Apte ).

१. सिद्धहेमशब्दानुशासनम्, चा० १।१।३१, 'आ० वा०'।

२. निपाताव्ययोपसर्गवृत्तिः, निपातकाण्डम्, ७९।

३. रूपमालायाम्, अव्ययार्थे, ७१।

यथा—'न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया' इति[1] ( काव्यादर्शे )।

'प्रति[2] च उत च प्रत्युत = वैपरीत्यम्। यथा—बुधादिवाक्यं तु न नियामकं प्रमाणाभावात्। प्रत्युत फलश्रुतेर्गुणफलबोधकमिति' इति। (तिथ्यादितत्त्वे) जन्माष्टमीप्रकरणे।

विहिताकरणात् पुंभिरसद्भिः क्रियते तु यः।
संयमो मुक्तये सोऽन्ते प्रत्युताधोगतिप्रदः ॥[3]

किमा सह सम्बद्ध उत, ऊत इति निपातद्वयमपि वितर्केऽर्थे प्रयुज्यते। यथा—'आहो उताहो किमुत वितर्के किं किमूत च'।[4]

(क) अयं स्थाणुराहो पुरुषः ?

(ख) उताहो विश्वमुद्भवेद्राजा नलः परपुरञ्जयः।

(ग) किमुत रज्जुः किं सर्पः ?

(घ) खेदयेत् किमु मानयेत्।

(ङ) एकमेव वरं पुंसामुत राज्यमुताश्रमः, इति ( रूपमालायाम् )।

उतनिपातः[5] पृथक्-पृथक् अनेकैर्निपातैः सह प्रयुक्तस्सन् अनेकानर्थान् अभिव्यनक्ति। सामान्यतोऽयं किमोऽवयवत्वेन प्रयुक्तः प्रश्नात्मकं वाक्यं निर्माति, किन्तु अयं किमि तरिक्तैनेकै·

---

१. वाचस्पत्यम्, पृ० १०७३।
२. शब्दकल्पद्रुमः, पृ० २२२।
३. मार्कण्डेयपुराणम् ९९।२०।
४. रूपमालायामव्ययार्थे १२।

५. Disjunctive interrogations are characterized by a great variety of particles Commonly former member being with 'किम्', but there are many other combinations. There are some instances.

(I) In the former member 'किम्', in the latter वा or किं वा, or अथवा or उत, or आहो or उताहो Dac 149, 'किमयं स्वप्नः किं विप्रलम्भो वा' ( is this a vision or is it delusion ? ) Panc. 230,

'किमेनमुत्थाय हन्म्यथवा हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि—( shall I rise and kill him or shall I slay both of them while sleeping ? )

(II) Mrcch. III P. 173, 'किं लक्ष्यसुप्तमुत परमार्थसुप्तमिदं द्वयम्' ( are these two men sleeping indeed, or counterfeiting sleep ).

(III) Cak. 'वैखानसं किमनया व्रतमाप्रदानात्······आहो निवत्स्यति समं हरिणाङ्गनाभिः' ( Must she keep the vow of chastity up to her marriage or is she to dwell with the antelopes of the hermitage forever ? )

To either member or to both another particles may be subjoined. Instead of 'किं' one······say 'किमु' 'किं नु' in the second member instead of 'उत', 'आहो', 'उताहो' also 'किमुत', 'उतस्वित्' 'आहोस्वित्' etc.

निपातैः सहापि प्रयुज्यते। अयमुतनिपातः किमोऽवयवो भूत्वा 'वा', किं वा 'अथवा', 'आहो', 'उताहो' इत्यादीनां निपातानामप्यर्थमभिव्यनक्ति। उतनिपातः कदाचिदेकाकी अपि प्रयुक्तो भवति, कदाचिच्चान्यैर्निपातैः सह प्रयुक्तो भूत्वा अर्थमभिव्यनक्ति।

निपातानां प्रयोगा अनेकानभिप्रायानाश्रित्य भवन्ति। यथा कदाचिद् वाक्यानां सम्मेलनाय, कदाचिच्चोपमासादृश्यप्रदर्शनाय। केषाञ्चिद् निपातानां प्रयोगः पादपूर्तये दृश्यते, केचन च निरर्थका दृश्यन्ते, तेषां च पादपूर्तिरेव फलम्। निपातानामियत्ता निश्चिता नास्ति। यदा उपसर्गैर्नामानि सर्वनामानि च विच्छिद्यन्ते, तदा ते उपसर्गाः कर्मप्रवचनीयत्वेन व्यवह्रियन्ते। उपसर्गा यदा क्रियायुक्ता न भवन्ति, एवं नामानि सर्वनामानि च न विशेषयन्ति, तदा निपातत्वेन व्यवह्रियन्ते। यथा 'प्रनायकः' इत्यादौ निपातत्वेन व्यवह्रियमाणः 'प्रशब्दः' "उपसर्गादसमासेऽपि" (पा० सू० ८।४।१४) इत्ययेन णत्वं विधातुं समर्थो न भवति।

तथा हि निपातानां स्वरूपं बृहद्देवतायां[१] प्रदर्शितम्—

उच्चावचेषु चार्थेषु निपाताः समुदाहृताः।
कर्मोपसंग्रहार्थे च क्वचिच्चौपम्यकारणात्॥

---

(i) Mrcch X, p. 367 'किं नु स्वर्गात्पुनः प्राप्ताः— किमुतान्येयमागता' (is she come back from heaven or is she another (Vasantasena).

(ii) Panc. 202, 'किं केनापि पाशेन बद्धः, उताहोस्वित् केनापि व्यापादितः'. (has anybody cought him in a snare or has anybody killed him ?)
Disjunctive interrogations of three or more members of course show a still greater variety of interrogative particles. Kumaras. 6.23.

किं येन सृजति विश्वमुत येन बिभर्ति तत्।
अथ विश्वस्य संहर्ता भागः कतम एव ते॥

(v. a. are you Bramha, Vishnu or Siva ?)

(iii) Panc. 332, 'किं मम वधोपायक्रमः कुब्जस्य वोताहो अन्यस्य वा कस्यचित्' (Is it I against whom the plot is laid or is it the hunchback or anybody else ?).

(iv) Panc. 177, 'किं सिंहादिभिः क्वापि व्यापादितः, उत लुब्धकैरथवानले प्रपतितो गर्तविषमे वा नवतृणलौल्यात्।' इति।
(Sanskrit Syntax, p. 414, By Dr. J. S. Speijer).

१. बृहद्देवता, २।८९, ९०, ९३।

ऊनानां पूरणार्था वा पादानामपरे क्वचित् ।
मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः ॥
इयन्त इति संख्यानं निपातानां न विद्यते ।
वशात् प्रकरणस्यैते निपात्यन्ते पदे पदे ॥

वाक्यपदीयेऽपि निपातानां स्वरूमेवमभ्यधायि । यथा—

द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधापि च ।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥[१]

( असत्त्वभूतार्था इति । असत्त्वभूतत्वमसिद्धस्वभावत्वम् । त्रयाणामवान्तरविशेष-सद्भावेऽपि सामान्यलक्षणम् । तानवान्तरविशेषानाह—'तेषामिति । व्यापारभेदः क्रियाविशेषकत्वमुपसर्गाणाम् । प्रयोगनियमश्च तेषां धातोः पूर्वं प्रयोगः । निपातैस्तु चादिभिर्भावसत्त्वयोरात्मभेदः प्रत्याय्यते' इति स तेषां व्यापारनियमः । तत्र भागवतमात्मभेदप्रत्याय्यनं यथा—'पचति', 'पठति' च सत्त्वगतत्वन्तु देवदत्तो यज्ञदत्तश्चेति । रूपं च शब्दस्वरूपादिः । अर्थः समुच्चयादिः । प्रयोगनियमश्चादीनां समुच्चेतव्यादिवाचिभ्यः परप्रयोगादिः । तथा हि 'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यादौ निशमनादिक्रियाविशेषोपजनितो यः संहितावर्षयोः कार्यकारण-सम्बन्धस्तस्यावच्छेदः—संहिताकारणं वर्षकार्यमित्येवंरूपः, तत्प्रत्यायनं कर्मप्रवचनीयानां व्यापारः ) ।[२]

वैदिकशब्दानुशासनकृता मैकडानलमहोदयेनापि निपातानां विषये महत्त्वपूर्णः विचारः प्रदर्शितः, तेन प्रतिपादितं यत्—'निपाताः कदाचिदुपमार्थस्याभिव्यक्तये, कदाचित् सादृश्य-प्रकटनाय, कदाचित् पादपूर्तये, कदाचिच्च निरर्थकाः सन्तो निपाताः पादपूर्तिमेव कुर्वन्ति । निपातानामियत्ता नास्ति' ।[३]

---

१. वाक्यपदीयम्, ३।१।१ ।   २. वाक्यपदीयम्, ३।१।१ ( रुचककृतटीका ) ।

३. "Particles are enumerated in various senses—both for the purpose of connecting actions and occasionally for the sake of comparison. Others again (are) occasionally (used) for the purpose of filling up defective verses (Pada). Those (particles) which in metrical book have the purpose of filling up (the verse) are meaningless...There does not exist an enumeration of the particles (stating explicitly). There are so many. These particles are used at every turn on account of the subject-matter.

—A Vedic Grammar by A.A. Macdonell, p. 213.

मैकडानलमहोदयेन उतनिपातार्थस्यापि महत्त्वपूर्णं विवेचनं कृतम्। तस्य महोदयस्यायमभिप्रायोऽस्ति यत्—उतनिपात ऋग्वेदेऽनेकार्थानभिव्यनक्ति। यथा अयं निपातः कदाचिदनेकानि पदानि वाक्यानि च परस्परं सम्मेलयति, कदाचिदयमुतनिपात: परस्परं सापेक्षौ द्वौ शब्दौ सङ्घटयति। यदा कस्मिंश्चिद् वाक्ये द्वे कर्मकारके समागच्छतः, तदा अयं निपातोऽन्तिमस्य कर्मकारकस्य पश्चादागच्छति। यदा कोऽपि शब्दः कस्मिन्नपि वाक्येऽसकृत् समागच्छति, तदायमुतनिपातो भूयो भूयः समागच्छन्तं शब्दमनुसरति। यदा कदा अयं निपातो मन्त्रे द्विवारमागत्य द्वित्वविशिष्टार्थं प्रतिपादयति। उतनिपातातिरिक्त ऋग्वेदे 'उतो' अस्यापि निपातस्य प्रयोग उपलभ्यते। तत्रास्य उतोनिपातस्यऽपि च–किमुत–अपि–इत्यादीनामर्थे प्रयोगः समुपलभ्यते।[1]

नाट्यशास्त्रेऽपि निपातानामाभिधानिकवैचित्र्याणि प्रदर्शितानि। यथा—

प्रातिपदिकार्थयोगाद्धातुच्छन्दो निरुक्तयुक्त्या च।
यस्मान्निपतन्ति पदे तस्मात् प्रोक्ता निपातास्तु॥[2]

धात्वर्थक्रियया सम्बन्धाद् ये पदे निपतन्ति, अर्थान् प्रतिपादयन्ति ते निपातपदेनोच्यन्ते। यथा च दुर्गः—'निश्चितः पातः एषामिति निपाताः। अर्थाभिधाने स्वक्रियायामसमर्थाश्चादयोऽव्ययाः सिद्धाः। तथा चाह- नामाख्यातप्रयोगेष्वर्थादभिन्ना निपतन्तीति निपाताः।"[3]

भोजराजोऽपि स्वकीये शृङ्गारप्रकाशे[4] निपातपदं विवृण्वन आह—'जात्यादिप्रवृत्तिनिमित्तानुपग्राहित्वेनासत्त्वभूतार्थाभिधायिनोऽलिङ्गसंख्याशक्तय उच्चावचेष्वर्थेषु निपतन्तीत्यव्ययविशेषा एव चादयो निपाताः। ते खलु विध्यर्थाः, अर्थवादार्थाः, अनुवादार्थाः, निषेधार्थाः, विधिनिषेधार्थाः, अविधिनिषेधार्थाश्चेति षोढा सम्भवन्ति। तद्यथा—

(क) तेषु मङ्गलम्, अधिकारः, संभ्रमः, नियोगः, समुच्चयः, विकल्प इति विधिः। यथा "ओम् अग्निमीळे पुरोहितम्" "अथातो ब्रह्म जिज्ञासा" इत्यादिः।

(ख) कुत्सा, प्रशंसा, विषादः, हर्षः, ईर्ष्या, विस्मय इत्यर्थवादः। यथा 'कुल्माषांश्चिदाहर' इत्यादिः। ( नि० १।४।१४ )।

---

१. A Vedic Grammar by A-A Macdonell, P. 222-223
२. नाट्यशास्त्रम्, १५।२८।
३. निरुक्ते १।३।१, दुर्गाचार्यस्य टीका।
४. शृङ्गारप्रकाशः १, पृ० १०।

(ग) स्मरणम्, उपमा, अभ्युपगमः, अनुप्रश्नः, परकृतिः, पुराकल्प इत्यनुवादः। यथा "पावको नकिर्मौणवकः, वक्षस्य नु ते पुरुहूतवयाः शाखाः" इति (ऋ० ४।६।१७)।

(घ) प्रतिषेधः, निवारणम्, अपाकरणम्, असूया, गर्हणा, विनिग्रह इति निषेधः। यथा "नेन्द्रं देवममंसत" इति (ऋ० ८।३।४)।

(ङ) सम्बोधनम्, अनुकम्पा वितर्कः, प्रश्नः पक्षान्तरम्, हेत्वपदेश इति विधिनिषेधः। यथा—"हन्ताहं पृथिवीमिमां निदधानीह वेह वा" इति (ऋ० ८।६।२७)।

(च) पदपुरणम्, पादपूरणम्, वाक्यपूरणम्, अलङ्कारपूरणम्, वाक्यालङ्कारः, पदसंस्कार इत्यविधिनिषेधः। यथा—"शिशिरं जीवनायकम्" (नि० १।१०।१), "कथमिवैतन्द्रविष्यति. एवाह्येव" इति (तै० आ० १।२०।१)।

निबन्धेऽस्मिन् निपातानां विषये अंशतः किञ्चिन्निरूपितम्, विशेषत उतरूपो निपातः कस्मिन् कस्मिन्नर्थे प्रयुक्तः, अन्येन निपातेन सह प्रयुज्यमान उतशब्दः किं किं वैशिष्ट्यमासादितवान् एतदपि यथायोगं प्रदर्शितम्। वैदिककालादारभ्य काव्यनाटकं यावदालोच्य उत–रूपनिपातार्थस्यैतिहासिकोऽर्थविस्तरो गवेषितः। अवशिष्टानां निपातानां विषये विवेचनं प्रतिक्षिप्यन्ते प्रेक्षावन्त इत्यभ्यर्थनया सह विरमामि।

———

# माघभारविभ्यां निरूपितं नीतितत्त्वम्

पण्डितराजराजेश्वरशास्त्री
राजनीतिशास्त्रार्थशास्त्र-विभागाध्यक्षचरः,
वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी

शास्त्रस्य दुर्बोधस्यार्थतत्त्वावधारणाय विदुषां महाकवीनामिदमप्येकं कर्तव्यं भवति यद्विज्ञानमयकोशस्य वैनतेयस्वरूपतयोपवर्णितस्याभिवृद्धये तदीयपक्षस्थानीयस्यर्तस्यावलम्बनमिति, तद्द्वारैव शास्त्रेषु निरूपितानामर्थानामानन्दाभेदेन सर्वसाधारणेष्वभिव्यक्तिदर्शनात्। तदिदं तत्त्वमभिसंधाय तैस्तैः कविभिः स्वीयसाहित्यभाषया विषयान्निबध्य तत्तच्छास्त्रार्था लोकानां स्वान्तेषु प्रवेशिताः सन्ति। तन्न्यायेन नीतितत्त्वस्य नवनीतं लोकेषु प्रचारयितुं माघभारविभ्यां सहृदयाभ्यां प्रकाशिता कृतिर्न कदापि नीतिविचक्षणानां विस्मरणार्हा भवतीत्यस्मिन् विजयादशम्यां प्रवृत्त उत्सवे तत्कर्तॄणां नीतेर्निर्धारणे कर्तव्यतयोपस्थिते उक्तकविभ्यां यदुपदिष्टमस्ति तत्किञ्चित् प्रकाश्यते।

अत्र हि संवादप्रसङ्गमिषेण तैस्तैर्वादिभिः स्वीयं स्वीयं मतं प्रकाश्यते, यथा माघेन कृष्णमतनिरूपणावसरे उच्यते—

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च॥ इति।

(शि० व० २।१०)

अत्र शत्रुवृद्धेरुपेक्षणस्यानौचित्ये हेतुः यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम्" इत्यग्रिमपद्येनोक्तो वेदितव्यः।

ततः कृष्णोपवर्णिते विषये बलरामेण स्वसम्मतिरेवं प्रदर्श्यते—

यद्वासुदेवेनादीनमनादीनवमीरितम्।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम्॥ इति।

(शि० व० २।२२)

एतदुत्तरावकाशमुपलभ्य मन्त्रकुशल उद्धवः स्वमतं प्रकाशयन् वक्ति—

सहजचापलदोषसमुद्धतश्चलितदुर्बलपक्षपरिग्रहः।
तव दुरासदवीर्यविभावसौ शलभतां लभतामसुहृद्गणः॥ इति।

(शि० व० २।११७)

अत्रायं भावः—कृष्णेन धर्मराजमखदर्शनार्थं यातव्यम्; तत्रैव शिशुपालः समित्र आगन्ता, तत्समये स कृष्णस्य तव सत्कारं पश्यन् वैरायितोऽवाच्यवादान् वक्ष्यति; तच्छ्रुत्वा यज्ञे सम्मिलिता इतरे राजानः शिशुपालात् पृथग्भूत्वा धर्मराजस्य मित्राणि भविष्यन्ति, येन तस्य शिशुपालस्य शमनं सुकरं भविष्यतीति। अन्यथा अनेके राजानः सन्तोऽपि यज्ञविघ्नहेतुतया त्वामसन्तं मत्वा तव शत्रुभावं प्राप्स्यन्ति, त्वं च धर्मराजस्याबान्धवो भविष्यसीति दोषोऽपि तत्रैव निरूपितः। तदुक्तम्—

तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परम्॥ इति।

(शि० व० २।१०१)

एतदुद्धववचः श्रुत्वा तदर्थमेव सिद्धान्तं कृष्णो मेने। तद्यथा—

कौवेरदिग्भागमपास्य मार्गमगस्त्यमुष्णांशुरिवावतीर्णः।
अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे॥ इति।

(शि० व० ३।१)

एवमेव भारविरपि युधिष्ठिरद्रौपदीभीमसेनसंवादमुखेन नीतितत्त्वं गूढं निगूढं प्रकाशयन् स्वीयगुणगौरवं प्रकटीचकार। तद्यथा भीमो वक्ति—

कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम्।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः॥ इति।

(कि० २।२२)

एवं च भीमसेनो धर्मराजं युद्धाय प्रेरयन् नीतिं प्रकाशयन्नास्ते इत्यत्र स्थितम्। किन्तु धर्मराजस्तां नीतिं न स्वीकरोति। किं बहुना, तदानीमगत्या वनवासमेव स्वरुचिविषयं कुर्वाणः पराक्रमसाधनानि सिसाधयिषुः सहिष्णुतामेवोपदिशति। तदुक्तम्—

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम्॥ इति।

(कि० २।४३)

ईदृग्रीत्या माघभारविभ्यामुपवर्णिते नीतितत्त्वे पूर्वपक्षोत्तरपक्षभावेन प्रकाशिते भीमसेनेन बलरामेण चोपवर्णितस्य मतस्य पूर्वपक्षता, उद्धवधर्मराजाभ्यां निबद्धस्य मतस्योत्तरपक्षता (सिद्धान्तता) इत्यत्र नियामकं यावन्नोपलभ्येत, तावत् कविहृदयभाव उन्नीतो न

भवेत्, न वा औचित्यस्यावगतिरपि। अत एतद्विषये अर्थशास्त्रस्य मतं विवेकार्थमवश्यं चिन्तनीयतां गतमस्ति, उपस्थितसंशयस्य निरासाय शास्त्रेणैव युक्तियुक्तेन विनिगमनाया एककोटिव्याप्यतायाश्चावगन्तुं शक्यत्वात्। तदुक्तम्—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ इति।

(कि० २।३३)

यद्यपि स्वस्वविचारदिशा तेषां तेषां नीतिचिन्तकानां कृतेऽन्यान्यपि नीतिशास्त्राणि सन्ति, तान्यनुसरतां तेषां किञ्चन फलमपि नासुलभम्, तथापि ये समस्तस्य लोकस्य योगक्षेमं यथावत् चिकीर्षवः सन्ति, तेषां कृते पूर्वतः प्राप्तमर्थशास्त्रमेव चाणक्यानुसृतं नियामकं बोध्यम्।

माघभारव्योरप्युपर्युक्तपूर्वपक्षोत्तरपक्षप्रकाशनेन सिद्धान्तस्थापनेन चात्मनोऽर्थशास्त्रानुयायित्वमेव प्रख्यापयित्रोरान्तरभावस्तदानीमेव स्फुटो भवेत्। तदनुसारेण विचारे विधीयमानेऽर्थशास्त्रोक्तरीत्या योगक्षेमचिन्तकयोः कृष्णयुधिष्ठरयोर्धर्मविजयित्वस्वभाव एव उपर्युक्तसिद्धान्तस्थिरीकरणे कारणमिति स्फुटं प्रतीयते। यत्र धर्मविजयित्वं भवति सोऽवश्यं बलसंवृत्त उत्साही प्रजानां योगक्षेमं विदधाति। अत एव समानतया लोके विचरन्तोऽपि सन्तः प्रजाया योगक्षेमविधायिनं नर प्रत्यनुरक्ताः, तस्मा आशिषः समर्पयन्तस्तमधिकृत्य पक्षपातमपि विदधतीत्यपि तत्रैवोक्तं विद्यते। यथा—

तथापि निघ्नं नृप तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः॥ इति।

(कि० ३।)

किञ्च, धर्मविजयी न कदाचिदपि निरपराधमयथार्हेण दण्डेन वा दण्ड्यं न दण्डयितुमभिसरतीति तत्र विश्वस्ताः सर्वे तं प्राप्य समाश्वसन्ति। सोऽयं विश्वासः कृष्णयुधिष्ठिराभ्यामात्मनि सम्पादितस्तपोधर्मविजयित्वस्य सूचको वर्तते। अत एव नारदो धर्मराजस्य दौत्यं कुर्वन् कृष्णदर्शनेनात्मानं कृतार्थं मन्यते।

तदुक्तम्—

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम त्वया।

त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्यं गुरु योगिनामपि ॥ इति ।
( कि० १।३१ )।

अत्रापाततो विचारकाः "काव्यत उपर्युक्तप्रसङ्गेन कृष्णस्य धर्मविजयित्वं न ध्वन्यते, शिशुपालमधिकृत्य प्रथमत एव यात्रायाः कर्तव्यत्वेन तदुक्तत्वात्" इति वदन्ति, परं नेदं शोभनं, मन्त्रिस्थाने, स्थितयोर्बलोद्धवयोर्मतजिज्ञासया तयोरवसरप्रदानाय कृष्णेन तथोक्तत्वात् । तदुक्तम्—

भवद्गिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ इति ।
( कि० २।८ )

यत्र किल धर्मविजयित्वं नास्ति, तत्र नेतृषु कामविजयित्वम्, लोभविजयित्वं वा नियतं भवति, तथाविधा नीतिकुशला अपि नेतारो राज्यमायत्तीकृत्य प्रजया सह कथं वर्तयन्तीति तदीयस्वाभाविकगुणवर्णनमर्थशास्त्र एवमुपलभ्यते—"त्रयोऽभियोक्तारो धर्मासुरलोभविजयिन इति । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति । तमभ्यवपद्येत परेषामपि भयात् । भूमिद्रव्यहरणेन लोभविजयी तुष्यति । तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेन असुरविजयी । तं भूमिद्रव्याभ्यामुपगृह्य अग्राह्यः प्रतिकुर्वीत" इति । ( कौ० अर्थ० १२ अधि०, १ अध्या० )। अत एव तौ व्यावर्त्य बाल्यावस्थायां यथा राजपुत्रो विनीतो भवेत्, तथा तदीयकर्माहारमातृपितृशुद्धौ सर्वैर्यतनीयमित्यादि विहितं संगच्छते । विनीतश्च राजपुत्रः सतां लक्षणैः सम्पन्नो भवति । तानि लक्षणानि चैवमाहुः—

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां लक्षणम् ॥ इति ।

तानीमानि लक्षणानि लोभविजयिन्यर्थप्रधाने, सुरविजयिनि च कामप्रधाने न कदाचिदपि संभवन्तीति लोकस्य बाहुल्येनात्मनि विश्वास्यत्वाधानहेतूनां निरूपयितुरर्थशास्त्रस्य मतेनासुरलोभविजयिनोर्मतानि न सिद्धान्ततया स्वीकर्तुमुचितानि संभवन्ति । अतः शास्त्रानुयायिनां हार्दिको भावो यदा शास्त्रमाधारीकृत्य चिन्त्यते, तदा धर्मप्रधानताविरोधो यत्र

यत्र भाति, तत्र सर्वत्रापि तेषां सम्मत्या हेतुताप्रदर्शनपुरस्सरमसुरलोभविजयिभ्यामुक्तः समस्तोऽप्यर्थः पूर्वपक्षत्वेनैव स्वीकर्तव्यो भवतीति प्रकृतेऽपि बलदेवभीमसेनयोरुक्तिर्माघ-किरातस्थिता पूर्वपक्षत्वभाक्त्वेनैवानुमन्यते नीतिविद्भिः ।

अथ तयोर्धर्मविजयित्वं कुतो नानुमन्तव्यमिति चेत् [१]भारतादीतिहासेषु तथैवोपलब्धेः, कामजव्यसनान्तर्गतस्य वारुणीव्यसनस्य बलदेवे आसक्तिदर्शनाच्चेति गृहाण ।

न ह्येतेन कामस्य सर्वथा हेयत्वमवगन्तव्यम्, तस्य धर्मविजयिनं प्रत्यङ्गत्वेन व्यवहृतौ शोभनीयत्वात् । तदुक्तं श्रीमद्भगवद्गीतायाम्--

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ इति !

( ७।११ )

एवं च पुरुषार्थेषु कामप्राधान्यं स्वीकृत्य धर्मस्याङ्कुशाभावे तद्विरोधे वा पर्यन्ते संभावितस्य तृष्णासचिवस्यासुरविजयित्वस्य अर्थपुत्रदारद्रव्यप्राणहरणानुमेयस्य सूचनं मा भूदित्येतदर्थं हेतुपुरस्सरं स्वमते उपपादितेऽपि धर्मस्य प्रसादशून्यत्वं स्वमते आलक्ष्य काम-प्रधानोऽपि नरः आत्मनो दोषबहुला नीतिः" इत्येवावसाययतीति बलदेवभीमसेनौ स्वस्वमतं प्रति उद्धवधर्मराजमन्त्रं श्रुत्वा नाग्रहं कृतवन्ताविति वैशिष्ट्य बोधयन्तौ इमौ माघभारवी कवी धर्मविरोध्यसुरविजयिमतं दूरीकुर्वन्तौ धर्मविजयित्वोपपादिकां नीतिमतीव ललितया संस्कृतया वाण्या आनन्दाभेदेन सर्वसाधारणेषु ग्राहयामासतुरित्यनयोरियं कृतिः सर्वैरवश्यं स्मर्तव्या अनुष्ठेया चेति सहृदयानां पुरतो निवेद्य विरम्यते इति ।



१. भीमसेन उवाच--"नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति" इत्यतः "कामो हि राजन्यः परो भवेत्" इत्यन्तादौ ( शा० १०, अ० १६७ )।

# वामनपुराणस्य पर्यालोचनम्

श्रीकृष्णमणित्रिपाठी, व्याख्याता
पुराणेतिहासविभागः,
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

## पुराणस्य वेदात्मकत्वम्

भारतीयवाङ्मये पुराणस्यास्ति प्रमुखं स्थानम्। वेदवाङ्मये पुराणस्य पञ्चमवेदत्वेन मान्यताभिमतास्ति। तथाहि छान्दोग्ये "इतिहासपुराणं पञ्चमं वेदानां वेदम्" (७।१।२)। स्कन्दपुराणस्य रेवाखण्डेऽपि पुराणं पञ्चमो वेदः स्वीकृतमस्ति—"पुराणं पञ्चमो वेद इति ब्रह्मानुशासनम्" (२।१८)। तत्रैवाग्रे पुनः पुराणं वेदानामात्माप्यङ्गीकृतम्—"आत्मा पुराणं वेदानाम्" (१।२२) नारदीयपुराणे तु पुराणाय वेदादप्यधिकं गौरवं प्रदत्तमस्ति—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः॥

(२।२४।२७)

स्कन्दपुराणस्य प्रभासखण्डे, तु वेदस्मृत्योरनुक्तस्यापि विषयस्य पुराणे प्रतिपादनाद् विशिष्टं महत्त्वमुक्तं पुराणस्य—

यन्न दृष्टं हि वेदेषु न दृष्टं स्मृतिषु द्विजाः।
उभयं यन्न दृष्टं हि तत् पुराणेषु गीयते॥

(७।२।६२)

## पुराणानुशीलनमत्यावश्यकम्

अतो वेदवाङ्मयस्य सम्यग् ज्ञानाय पुराणानामनुशीलनं नितान्तमावश्यकम्। पुराणेषु धर्म-दर्शन-सर्ग-प्रलय - रीति - नीति-आचार-व्यवहार-राजर्षिवंशानुचरित - भुवनकोश-तीर्थ-व्रत-दानादीनां देवासुरमनुष्यादीनामाख्यानस्य च समावेशो विद्यते, येन प्राक्तनं भारतीयं स्वरूपं साधु विज्ञातं भवति। आख्यानद्वारा अध्यात्मिकतथ्यानां सरलतया प्रतिपादनं पुराणानां वर्तते विशिष्टा शैली। साम्प्रतं पुराणानि भारतीयधार्मिक-सामाजिक-सांस्कृतिक-साहित्यिकेतिहासपरम्परायाः सम्यग् ज्ञानायास्ति एकमात्रं साधनम्, यतो हि भारतीयसंस्कृतेर्वास्तविकं स्वरूपं पर्याप्तमात्रतया पुराणेष्वेव प्रतिबिम्बितं वर्तते।

धार्मिकदृष्ट्या पुराणानि वेदविहितस्यैव धर्मस्य भावगम्यया प्राञ्जलया भाषया विशदं वर्णनं कुर्वन्ति । पुराणानां सामाजिकं सांस्कृतिकं च महत्त्वं न्यूनं नास्ति, यतो पूर्वतनस्य समाजस्य प्राचीनाया भारतीयसंस्कृतेश्च स्वरूपमस्माभिः पुराणैरेवावगम्यते । भौगोलिकदृष्ट्या पुराणेषु समुद्र-द्वीप-वन-पर्वत-नद-नदी-तीर्थ-जलाशयादीनां विद्यते विस्तृतं विवेचनम्, येन पृथिव्याः, तत्तत्स्थानानां विस्तृतस्य भूगोलस्य सम्यग् ज्ञानं जायते । पौराणिकस्येतिहासस्य पुष्टिस्तु तत्र तत्रोपलब्धैः शिलालेखैः, ताम्रपत्रैः, मुद्राभिः, वैदेशिकानां यात्रावर्णनेन चेदानीं प्रचुरमात्रया बोभूयते ।

पुराणानि गौरवदृष्ट्या अत एव दृश्यन्ते, यतोऽत्र वेदशिक्षायाः पुष्टिः कृतास्ति दृष्टान्तद्वारा च वेदार्थस्यैव विशदीकरणं विद्यते । "सत्यं वद, धर्मं चर" इत्याद्युपदेशमात्रेण न कश्चित् सत्यवादी धर्मात्मा च भवितुमर्हति, यावत् सत्यवादिनो राज्ञो हरिश्चन्द्रस्य धर्मनिष्ठस्य युधिष्ठिरस्य च मनोहरा कथा नोपदिष्टा भवेत् ।

लौकिकविषयातिरिक्तानां पारलौकिकविषयाणामपि पर्याप्तं विवेचनं पुराणेषु कृतं विद्यते । पुराणानां दृष्टौ न केवलं दृश्यमानमेव प्रपञ्चमस्ति, अपि तूर्ध्वाधो विद्यमानानां चतुर्दशभुवनानामपि पदार्थाः पुराणदृष्टिपथातिथयः सन्ति । एवं विश्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां पर्यालोचनं कस्य सचेतसो न हर्षाय स्यात् ।

## पुराणानां वेदार्थोपयोगित्वम्

मन्ये पुराणानामध्ययनमन्तरा ये वेदानां यथार्थमर्थमवगन्तुमीहन्ते, न तेषां सम्भवति वास्तविकं ज्ञानम्—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजाः ।
नो चेत् पुराणं सविद्याद् नैव स स्याद् विचक्षणः ॥

( पद्मपु०, सृ० ख० २।५१ )

स्कन्दपुराणे तु पुराणानभिज्ञस्य विपश्चितो धर्माधर्म-ज्ञानाज्ञानादिकविवेको न सम्भवतीति स्पष्टमभिहितम्—

यो न वेद पुराणं हि स न वेदात्र किञ्चन ।
कतमः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम् ॥

( रे० ख० १।१६ )

अत एव प्रभासखण्डे पुराणं सर्वशास्त्रमयमभिहितमस्ति—

ततः पुराणमखिलं सर्वशास्त्रमयं स्मृतम्।

( ७।२।४ )

अतो वेदानां सम्यग् ज्ञानाय पुराणानामध्ययनमत्यावश्यकम्, यतो हि पुराणद्वारैव वेदानामुपबृंहणस्यानिवार्यता प्रतिपादिता महाभारते--

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।

( आदिपर्व १।१६ )

## वामनपुराणस्य स्वरूपनिरूपणम्

प्रायः प्रतिपुराणमष्टादशमहापुराणानामुल्लेखो विद्यते। तत्र वामनपुराणं गणनाक्रमेण चतुर्दशं महापुराणमभिमतमस्ति। तथाहि शौनकं प्रति सूतवचनम्--

ततस्तु वामनं नाम चतुर्दशतमं स्मृतम्।
संख्यया दशसाहस्रं प्रोक्तं कुलपते पुरा॥

( स्कन्दपु०, रे० ख० १।४१ )

स्वयं वामनेनापि फलश्रुतिसहित एष एव संख्याक्रमोऽभिहित.--

चतुर्दशं वामनमाहुरग्र्यं श्रुते च यस्याघचयाश्च नाशम्।
प्रयान्ति नास्त्यत्र च संशयो मे महान्ति पापान्यपि नारदाशु॥

( वाम० पु० ६९।११ )

अखिललोकनियन्तुर्भगवतो विष्णोर्वामनावतारस्य सविस्तरं रुचिरचरित्रप्रतिपादनादस्य पुराणस्य नाम वामनपुराणम् इति जातम्। नारदीयपुराणे वामनपुराणस्य लक्षणनिरूपणप्रसङ्गे प्रोक्तमस्ति यद् यस्मिन् पुराणे लोकपितामहेन ब्रह्मणा त्रिविक्रमस्य (भगवतो वामनस्य) चारु चरित्रमभिलक्ष्य कूर्मकल्पानुसारं धर्मार्थकामविषयकस्य कथानकस्य निर्देशोऽस्ति तद् दशसहस्रश्लोकसंख्याकं श्रोतुर्वक्तुश्च कल्याणकरं भागद्वयात्मकं वामनपुराणमुच्यते—

शृणु वत्स ! प्रवक्ष्यामि पुराणं वामनाभिधम्।
त्रिविक्रमचरित्राढ्यं दशसाहस्रसंख्यकम्॥
कूर्मकल्पसमाख्यानं वर्गत्रयकथानकम्।
भागद्वयसमायुक्तं श्रोतृ-वक्तृसुखावहम्॥

( नारदीयपुराणम् १।१०५।१,२ )

परन्तु मत्स्यपुराणे स्कन्दपुराणस्य प्रभासखण्डे च वामनपुराणस्य स्वरूपमेवमभिहितमस्ति यद् यस्मिन् पुराणे चतुराननेन ब्रह्मणा कूर्मकल्पानुसारं भगवतो वामनस्य माहात्म्यमवलम्ब्य त्रिवर्गस्य विषया वर्णिताः सन्ति, दशसहस्रश्लोकात्मकं तद् वामनपुराणं प्रोच्यते—

त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधात् तच्च वामनं परिकीर्तितम् ॥
पुराणं दशसाहस्रं कूर्मकल्पानुगं शिवम् ।

( म० पु० ५३।४४-४५; स्क० पु० ७।२।६३,६४ )

एवं वामनपुराणे द्वौ भागौ स्तः— पूर्वभाग, उत्तरभागश्च । नारदीयपुराणानुसारमुत्तरभागस्य बृहद्वामनमपि नामान्तरमस्ति । तत्र चतस्रः सन्ति संहिताः—( १ ) माहेश्वरीसंहिता, ( २ ) भागवतीसंहिता, ( ३ ) सौरीसंहिता, ( ४ ) गाणेश्वरीसंहिता च । माहेश्वरीसंहितायां भगवतः कृष्णस्य तद्भक्तानाञ्च कीर्तनमस्ति । भागवतीसंहितायां भगवत्या जगदम्बाया अवतारकथा विद्यते । सौरीसंहितायां सर्वपापापनोदकस्य भगवतो भास्करस्य महिमा वर्णितोऽस्ति । गाणेश्वरीसंहितायां च विघ्नव्यूहविनाशकस्य विनायकस्य विचित्रं चरित्रं चर्चितमस्ति । चतसृष्वपि आसु संहितासु प्रत्येकं सहस्रं सहस्रं श्लोकाः सन्ति, येषां पूर्णा संख्या चतुःसहस्रं भवति—

शृणु तस्योत्तरं भागं बृहद्वामनसंज्ञकम् ।
माहेश्वरी भागवती सौरी गाणेश्वरी तथा ।
चतस्रः संहिताश्चात्र पृथक् साहस्रसंख्यया ॥

( नारदी० पु० १।१०५।१३, १४)

चतुःसहस्रश्लोकात्मकश्चतसृसंहितासनाथो बृहद्वामनसंज्ञको वामनपुराणस्योत्तरो भागः साम्प्रतं नोपलभ्यते, किन्तु केवलं लघुभागवतामृते, वीरमित्रोदयादिनिबन्धग्रन्थेषु वृन्दावनस्थानां गोस्वामिनां कृष्णभक्तिविषयकग्रन्थेषु च बृहद्वामनस्य कतिपये श्लोका दृष्टिगोचरीभवन्ति। रूपगोस्वामिन उज्ज्वलनीलमणौ मुनीनां गोपीभावप्रसङ्गे, जीवगोस्वामिनश्च भागवतसन्दर्भे कृष्णलोकवर्णनप्रसङ्गे वा बृहद्वामनस्य निर्देशो विद्यते । परं केवलमिदानीं वामनपुराणस्य पूर्वो भाग एवोपलभ्यते, यत्र वेङ्कटेश्वरसंस्करणानुसारं प्रायः षट्सहस्रश्लोकाः पञ्चनवतिश्चाध्यायाः सन्ति । तथा च नारदीयानुक्रमणिकानुसारं वामनपुराणस्य पूर्वभागीयविषयास्तु ९५ अध्यायेषु विभक्ता वेङ्कटेश्वरसंस्करणे यथार्थतो मिलन्ति, किन्तु तदुत्तरभागस्य ४,००० श्लोकानामस्तित्वं

न क्वचन मुद्रितेषु पुस्तकेषु, नापि हस्तलिखितेषु वर्तते, अपि च वामनपुराणस्याध्यायनिर्णय-सम्बन्धे वङ्गकश्मीरदक्षिणोत्तरभारतीयेषु विभिन्नेषु हस्तलेखेषु महती विभिन्नता दृश्यते। कुत्रचित् ८४, कुत्रचन ८९, क्वचित् ८५, क्वचन च ६७ अध्याया उपलभ्यन्ते। तथाहि देवनागरीहस्तलेखे ८४ अध्यायाः सन्ति। तेलगूहस्तलेखे ८९ अध्याया विद्यन्ते। शारदालिपि-हस्तलेखे ८५ अध्याया वर्तन्ते। अड्यारहस्तलेखे शृंगेरीमठहस्तलेखे च ६७ अध्याया अङ्किताः सन्ति।

एवं कलिकातातो महेशचन्द्रपालसम्पादिते पञ्चाननतर्करत्नसम्पादिते च वङ्गाक्षर-संस्करणे जगद्धितेच्छुप्रेसपूनातो वेङ्कटेश्वरप्रेसबम्बईतश्च मुद्रिते देवनागरीसंस्करणे वा वामनपुराणस्य श्लोकसंख्यायां विभिन्नता दृश्यते। अतो वामनपुराणस्य वास्तविकं स्वरूप-निर्द्धारणं नासम्भवं वक्तुं शक्यते, परन्तु दुरूहमवश्यमस्ति।

## पुराणलक्षणसंघटनम्

नारदीयपुराणनुसारं वामनपुराणस्य पूर्वभागीयविषयसूच्यां येषां येषां विषयाणां येन येन क्रमेणोल्लेखो विद्यते, तेषां समेषां विषयाणां तेनैव क्रमेणोपलब्धिरद्यत्वे उपलब्धवामन-पुराणे भवति। यद्यपि मरुतामुत्पत्तिप्रसङ्गे सप्तानां मनूनां मन्वन्तराणाञ्च निरूपणं दृश्यते; शुक्राचार्यस्य कन्याया अरजायाश्चोपाख्याने कियतामिक्ष्वाकुवंशोद्भवानां राज्ञां प्रसङ्ग उपलभ्यते, तथापि वर्तमानवामनपुराणे पुराणपञ्चलक्षणं न सम्यक् संघटते। अतः पुराणमिदमपूर्ण-पुराणेषु गण्यते।

## वामनस्य महापुराणत्वसिद्धिः

वामनपुराणं महापुराणमुत उपपुराणमिति सन्दिहानाः केचन कथयन्ति यद् गरुड-पुराणे महापुराणगणनायां वामनपुराणस्यानुल्लेखादुपपुराणगणनायां च तन्नामनिर्देशा-देतन्महापुराणं भवितुं नार्हति, अपि तूपपुराणकोटावेवास्य प्रवेशः समुचितः। अत एव डॉ० हाजरामहोदयेन स्वकीये पुस्तके वर्तमानवामनपुराणमुपपुराणं साधयितुं भागीरथः प्रयासो विहितोऽस्ति।

परमन्ये विपश्चितो भूयसा व्यपदेशा भवन्तीति न्यायमाश्रित्य शेषेषु पुराणेषु महापुराण-गणनायां वामनपुराणस्य स्पष्टं नामनिर्देशादिदं महापुराणमेवास्तीति ब्रुवते। अत एव अरबयान्त्रिणा अल्बेरुणिना स्वग्रन्थे यत् पुराणानां सूचीद्वयं प्रस्तुतम्, तत्रोभयत्रापि वामनपुराणस्य

महापुराणान्तर्गतं नाम निर्दिष्टमस्ति। तस्मादन्वर्थनाम्नः स्वल्पाकारस्यापि वामनपुराणस्य महापुराणत्वे नास्ति कापि संशीतिः।

## वामनपुराणावतरणपरम्परा

वामनपुराणस्यावतरणपरम्परायाः प्रदर्शने नारदीयपुराणे प्रोक्तमस्ति यत् सर्वप्रथमं वामनपुराणं पुलस्त्येन मुनिना देवर्षये नारदाय समुपदिष्टम्। स च महर्षिं व्यासं प्रति प्रोक्तवान्। तेन स्वशिष्याय लोमहर्षणाय सूताय उपदिष्टम्। स च नैमिषारण्ये शौनकादीन् मुनीन् प्रति प्रोवाच। इत्येवं परम्परया वामनपुराणं लोके ख्यातिमुपगतम्—

इत्येतद् वामनं नाम पुराणं सुविचित्रकम्।
पुलस्त्येन समाख्यातं नारदाय महात्मने॥
ततो नारदतः प्राप्तं व्यासेन सुमहात्मना।
व्यासात्तु लब्धवान् वत्स ! तच्छिष्यो लोमहर्षणः॥
स चाख्यास्यति विप्रेभ्यो नैमिषीयेभ्य एव च।
एवं परम्पराप्राप्तं पुराणं वामनं शुभम्॥

(नारदीयपुराणम् १।१०५।१७, १८)

एवं नारदीयपुराणानुसारं वामनपुराणस्यास्ति वक्ता पुलस्त्यो महामुनिः, प्रश्नकर्ता श्रोता च देवर्षिर्नारदः।

## वामनस्य वैष्णवधर्मप्रतिपादकता

वामनपुराणस्योपक्रमोपसंहारपर्यालोचनया प्रतीयते यदिदं पुराणं वैष्णवधर्मेणास्ति सम्बद्धम्। अस्यारम्भेऽवसाने च वैष्णवधर्मस्य विष्णुभक्तानां विष्णुमन्दिरस्य तन्निर्मातॄणां च महती प्रशंसा कृतास्ति विभिन्नैः पुष्पैः पत्रैश्च विष्णोः पूजाया विशदं वर्णनं विद्यते। अपि च वैष्णवधर्मस्यातिप्रसिद्धं मङ्गलाचरणम्।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥

इति वामनपुराणस्यारम्भेऽक्षिलक्ष्यीक्रियते। अपि च मत्स्यपुराणे वामनपुराणस्य दानेन विष्णुलोकप्राप्तेरुल्लेखादस्य पुराणस्य निर्बाधं वैष्णवधर्मप्रतिपादकता सिध्यति।

यः शरद्विषुवे दद्याद् वैष्णवं यात्यसौ पदम्।

(मत्स्यपुराणम् ५३।४५)

## वामने स्तोत्रसंख्या

वामने विविधानि पञ्चविंशतिः स्तोत्राणि सन्ति । तत्र द्वादश स्तोत्राणि विष्णुसम्बन्धीनि सन्ति, यानि भगवतो विष्णोर्विभिन्नं वैशिष्ट्यं बोधयन्ति । अष्टौ स्तोत्राणि सन्ति आशुतोषस्य भगवतः शिवस्य स्वरूपव्यञ्जकानि । चतसृणां देवी-पार्वती-सरस्वती-कात्यायनीनां चत्वारि स्तोत्राणि सन्ति, यानि तासामुत्कृष्टं प्रभावं प्रकटयन्ति । एकं स्तोत्रं च सुदर्शनस्य वैभवं सूचयति ।

## वामनपुराणस्य वैशिष्ट्यम्

वामनपुराणस्य सर्वतो विशिष्टं वैशिष्ट्यमस्ति यदिदं पुराणं न केनापि सम्प्रदायविशेषेण सम्बद्धमस्ति । प्रत्युत अत्र भगवतो विष्णोः, शिवस्य देव्याश्च समानं सम्मानं प्रदर्शितमस्ति । नात्र साम्प्रदायिकभावनाया ईषदपि गन्धो दृश्यते, न वा क्वचन तान्त्रिकादिपूजाविधेरुल्लेखोऽक्षिगोचरो भवति । अत एवेदं पुराणं महत्त्वपूर्णेषु महापुराणेष्वन्यतमत्वेन ख्यातिमुपगतमास्ते ।

## वामनस्य राजसपुराणत्वम्

वैष्णवपुराणत्वेन प्रतीयमानमपि वामनपुराणं पद्मपुराणस्योत्तरखण्डे भविष्यपुराणस्य प्रतिसर्गपर्वणि च राजसपुराणतया प्रोक्तमस्ति —

ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥

( पद्मपु०, उ० ख० २३६।२० )

मत्स्यः कूर्मो नृसिंहश्च वामनः शिव एव च ।
वायुरेतत्पुराणानि व्यासेन रचितानि वै ॥
तामसाः षट् स्मृता वीरकर्मकाण्डमया भुवि ।

( भ० पु०, प्र० प० २८।११ )

किञ्च, पद्मपुराणे सात्त्विकानि पुराणानि मोक्षप्रदानि प्रोक्तानि, राजसानि च स्वर्गसुखसाधकानि कथितानि । अतो राजसस्यास्य वामनपुराणस्य स्वर्गप्रदत्वं स्पष्टं सिध्यति—

सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।

( पद्मपु०, उ० ख० २३६।२१ )

## हरेरवयवत्वकल्पना

पद्मपुराणस्य स्वर्गखण्डे तत्तत्पुराणानि भगवतो विष्णोर्विभिन्नाङ्गत्वेनोत्प्रेक्षितानि सन्ति। तत्र वामनपुराणं हि हरेस्त्वक्त्वेन कल्पितमस्ति। तस्येदं तात्पर्यमवसीयते यद् यथा समस्तं शरीरं त्वचा आवृतं विद्यते, तथैव वामनपुराणमपि व्यापकतया भगवतो विष्णोर्महत्त्वमभिव्यञ्जयति।

## वामनपुराणविषयः

वामनपुराणे देवर्षिनारदस्य प्रश्नानन्तरं महर्षिपुलस्त्यद्वारा वामनोपक्रमः शरद्वर्णनम्, दक्षयज्ञे सतीशरीरत्यागः, हिमालयान्मेनायां पार्वतीप्रादुर्भावः, तस्याः पत्युः शिवस्य प्राप्तये तपश्चर्या, वटुवेषेण शिवेन सह वार्तालापः, तया सह शिवस्य विवाहः, गणेशोत्पत्तिः, कार्तिकेयस्य रुचिरं चरित्रचित्रणम्, दैत्यराजस्य प्रह्लादस्य नैमिषतीर्थयात्रा, बदरिकाश्रमे नरनारायणाभ्यां युद्धम्, कुरुक्षेत्रस्य तदन्तर्वर्तिनां तीर्थानां माहात्म्यवर्णनम्, सरोमहत्त्वप्रदर्शनम्, दानस्य महिमा, व्रतानामनुष्ठानविधिः, भगवतः शिवस्य विभिन्नाङ्गानामलङ्काररूपेण सर्पाणां नामग्रहमुल्लेखः, सुकेशिप्रसङ्गे जम्बूद्वीपान्तर्वर्तिनां वर्षाणां वर्णनम्, भुवनकोशे भारतवर्षीयवन-पर्वत-नद-नदी-जनपदादीनामुल्लेखः, कात्यायनीप्रादुर्भावः, तद्द्वारा महिषासुरादीनां वधः, अन्धकस्योत्पातः, शुक्राचार्यद्वारा सञ्जीवनीविद्याप्रयोगः, मलयपर्वते दानवैः सहेन्द्रस्य युद्धम्, देवासुरादीनां विविधवाहनवर्णनम्, वामनावतारस्य विशदं वर्णनञ्चेत्येते महत्त्वपूर्णाः पौराणिका विषया विशेषतया वर्णिताः सन्ति। अपि च निबन्धग्रन्थेषु वामनपुराणनाम्ना समुद्धृता बहवः श्लोका वर्तमानवामनपुराणे नोपलभ्यन्ते। वामनपुराणतः करकचतुर्थीकथा-गङ्गामाहात्म्य-गङ्गामानसिकस्नान-वाराहमाहात्म्य-वेंकटगिरिमाहात्म्यप्रभृतयोऽनेके लघुकलेवरा ग्रन्था निःसृताः सन्ति।

## वामनावतारकथासारः

पुराणेषु विशेषतः श्रीमद्भागवते वामनपुराणे च राज्ञो बलेः प्रसङ्गे वामनावतारस्य विशदं वर्णनमुपलभ्यते। स्वर्गं विजित्य दैत्यराजो बलिः स्वयमिन्द्रो भूत्वा देवान् ततो बहिश्चकार। ततो दुःखितानां देवानां विनम्रया प्रार्थनया तेषां कामनापूर्तये भगवान् विष्णुः कश्यपाददितेर्गर्भाद् वामनरूपेणाविर्भूय बलेर्यज्ञशालामुपस्थाय पदत्रयभूमिमयाचत। गुरुणा शुक्राचार्येण भूयो भूयो वार्यमाणोऽप्यात्मानं धन्यतमं मन्यमानो बलिः करे कुशोदकमादाय सहर्षं संकल्प्य वामनस्य याच्ञां पूरितवान्। तदनन्तरं वामनेनावामनीभूयैकेन पदा पृथ्वीं

द्वितीयेनान्तरिक्षं चाक्रम्य तृतीयं चरणं स्वयं समर्पिते बलेः शिरसि निधाय स्वकीयं त्रिविक्रमं नाम चरितार्थीकृतम्. बलिः पाताले प्रेषितः पृथ्वी चेन्द्राय प्रदत्ता, देवाश्चाभयाः कृताः।

## वामनावतारस्य मूलं स्रोतः

यथा प्रत्येकं शास्त्राणां नैजं वैशिष्ट्यं स्वीयाश्च विशेषविषया भवन्ति येषां मुख्यतया प्रतिपादनं तेषु तेषु शास्त्रेषु क्रियते, तथैव पुराणानामपि स्वीयौ विशेषविषयौ स्तः—तत्रैकः सृष्टिप्रक्रियाविवेचनम्, द्वितीयश्चाख्यानकथनम्। यथा सृष्टिविषयकसिद्धान्तानां ज्ञानाय विभिन्नदार्शनिकसिद्धान्तानां ज्ञानमावश्यकमस्ति, येषां निरूपणं तत्तद्दर्शनग्रन्थेषु विशेषरूपेण कृतमास्ते, तथैव पौराणिकानामाख्यानानां यथार्थरहस्यज्ञाननिमित्तं तेषामाख्यानानां मूलभूतस्य वेदवाङ्मयस्यानुशीलनमस्त्यावश्यकम्। यत्र तेषां तेषामाख्यानानां बीजं निहितमस्ति। अतो वैदिकानामाख्यानानामाधारे पौराणिकानामाख्यानानामर्थकरणं नितान्तमावश्यकं वर्तते। तदनुसारं वामनावतारकथायाः किं बीजमिति जिज्ञासायामुच्यते—वामनावतारस्य कथाया मूलं स्रोतो वैदिकवाङ्मये प्रामाणिकतया उपलभ्यते। ऋग्वेदे विष्णुसूक्तस्य विभिन्नेषु मन्त्रेषु ( १।२२।१७,१८ ) वामनावतारस्य सङ्केतो विद्यते। शतपथब्राह्मणे च ( १।२।५-७ ) वामनस्य प्रसङ्गो वर्तते। एवञ्च ऋग्वेदस्योरुगायं त्रिविक्रमं भगवन्तं विष्णुं शतपथस्य वामानाख्यानञ्चैकीकृत्य पुराणेषु वामनावतारस्य पूर्णः प्रसङ्गः प्रस्तुतः। तत्रान्तरमिदमेवास्ति यद् यत्र शतपथब्राह्मणे असुरेभ्यो मूनेर्ग्रहणमुक्तमस्ति, तत्र पुराणेषु बलेर्बलम् पृथिव्या हरणं प्रदर्शितमस्ति। अपि च शतपथस्य कथानकं यत्र देवैरसुराणां भूमौ यज्ञस्य विस्तारं विधाय सा आत्मसात् कृता, तत्र पुराणेषु त्रिभिः क्रमैः पृथ्वी-स्वर्ग-बलिशरीराक्रमणानन्तरं वामनेन समस्तां भूमिमसुरेभ्यो गृहीत्वा सा देवेभ्यः समर्पिता। इयं शतपथीयं पौराणिकं चोभयमाख्यानं भगवतो विष्णोर्महिमानं व्यनक्ति।

## बलेर्यज्ञस्थलम्

दैत्यराजस्य बलेः परमः पवित्रोऽश्वमेधयज्ञः इलायामस्यां क्व सम्पन्न इति जिज्ञासाशान्तये वामनपुराणस्य मतमस्ति यद् बलेरश्वमेधोऽध्वरोऽधिकुरुक्षेत्रेऽजायत। तथाहि भरद्वाजं प्रति वामनवचनम्—

ब्रह्मन् व्रजामि देह्याज्ञां कुरुक्षेत्रं महोदयम्।
तत्र दैत्यपतेः पुण्यो हयमेधः प्रवर्तते॥

( वामनपुराणम् ६२।५२ )

अत एव वामने कुरुक्षेत्रस्य तदन्तर्वर्तिनां तीर्थानाञ्च विशेषरूपेण वर्णनं महत्त्वं च प्रदर्शितं वर्तते। अग्निपुराणानुसारं बलियज्ञो राजद्वारे ( गङ्गाद्वारे ) जातः। तथाहि महर्षेर्वसिष्ठस्याभ्यर्थने अग्नेः प्रतिवचनम्—

स्तुतोऽसौ वामनो भूत्वा ह्यदित्यां स क्रतुं ययौ।
बलेः श्रीयजमानस्य राजद्वारेऽगृणात् श्रुतिम्॥

( अ० पु० ४।७ )

पद्मपुराणानुसारं हि बलेर्मखस्थलं पुष्करं वर्तते। तद्यथा पुलस्त्यं प्रति भीष्मस्य निवेदनम्—

क्षेत्रे पैतामहे चास्मिन् पुष्करे यज्ञपर्वते।
पदानि कृतवान् ब्रह्मन् विस्तरान्मम कीर्तय॥

( प० पु०, सृष्टिख० ३०।८ )

श्रीमद्भागवतानुसारं तु बलेर्यागो नर्मदाया उत्तरे तटे भृगुकच्छे (भडौच) सम्पन्नः, यत्र भृगुवंशीया ब्राह्मणा ऋत्विजो भूत्वा यज्ञस्य कार्यजातं सम्पादितवन्तः—

तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके।
प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविम्॥

( श्रीम० भा० ८।१८।२१ )

## अर्थकरणे सावधानता

पुराणेष्वनेकान्येतादृशान्यस्पष्टार्थानि वचनान्युपलभ्यन्ते, येषां न सहसा यथार्थोऽर्थोऽवगन्तुं शक्यते। अतस्तेषां वास्तविकव्याख्यायै तत्प्रामाणिकटीकानामवलोकनं नितान्तमावश्यकं भवति। यथा—

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै होत्रात्मने नमः॥

( वा० पु० ५।१ )

श्लोकोऽयं वामनपुराणस्य सरोमाहात्म्यप्रकरणे कश्यपद्वारा कृतायां विष्णुस्तुतौ वायु-
ुराणे महाभारतस्य शान्तिपर्वणि भीष्मस्तवराजेऽङ्कितोऽस्ति। परमस्य वास्तविकं रहस्यं न
ीकानुशीलनमन्तरा मनोविषयीभवति! अतो महाभारते नीलकण्ठेनास्य व्याख्या एवं
ृतास्ति, यया तद्रहस्यं सम्यक् स्पष्टीभवति। तथाहि—आश्रावय इति चतुरक्षम्। अस्तु

श्रौषट् इति चतुरक्षरम्। यज इति द्व्यक्षरम्। ये यजामहे इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कार इति ( गणनया ) सप्तदशभिरक्षरैर्यो हूयते, तस्मै होत्रात्मने विष्णवे नमः।

## वामनपुराणसमयः

यद्यपि प्राचीनपद्धतिपक्षपातिनो विशिष्टा विद्वांसः—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये।
जातः पराशराद् योगी वासव्यां कलया हरेः॥

( श्रीम० भा० १।४।१४ )

व्यासेन कृत्वातिशुभं पुराणं शुकाय पुत्राय महात्मने यत्।
वैराग्ययुक्ताय च पाठितं वै विज्ञाय चैवारणिसम्भवाय॥

( देवीभा० १।३।३६ )

इत्यादिवचनानुसारं कलि-द्वापरसन्धिसमये पुराणानां व्यासकृतित्वमङ्गीकुर्वन्ति, तथाप्यर्वाचीनाः केचन विचारका देश-काल-परिस्थिति-भाषा-भाव-वर्णन-शैलीनामाधारे तेषां विभिन्नकालकर्तृकृतित्वं मन्यन्ते। तदनुसारं वामनपुराणमपि नातिचिरातनं पुराणं भवितुमर्हति। अत्र तेषामस्ति तर्को यद् वामनपुराणीयपार्वती-वटुरूपधारिशिवयोः संवादस्य कुमारसम्भवस्थेन तयोः संवादेन न केवलमर्थस्यैवास्ति साम्यम् अपि त्वक्षराणामपि साम्यं वर्तते। क्वचन छन्दोऽपि समानमेव प्रयुक्तमस्ति। अतः कुमारसंभवप्रभावाद् वामनपुराणस्य रचनाकालः कालिदासोत्तरं षष्ठ-नवमशताब्दीमध्ये एव भवितुमर्हतीति सुधिभिर्विभावनीयम्।

---

# ब्राह्मणविचारधाराया उद्भवो विकासश्च

डॉ० जगदीशदत्तदीक्षितः, एम० ए०, पीएच० डी०, साहित्याचार्यः
अध्यक्षः, संस्कृत-विभागस्य,
हस्तिनापुरमहाविद्यालयः मोतीबाग, नई दिल्ली

यो देवानां प्रभवोद्भवश्च विश्वाधिपो रुद्रो महर्षिः।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्धया शुभया संयुनक्तु ।।

प्रारब्धपरिणतिं भुञ्जानानां जनानामाध्यात्मिकादितापत्रयचिन्ताचक्रव्यूहोत्पाटनपटीयो ज्ञानमेव मोक्षसाधनम्। तद्धि ज्ञानमौपनिषद्दर्शनस्याध्ययनेन ज्ञोभवीतीति निगमागमार्थ-सार्थं परिचिचीषुभिः षडङ्गो वेदोऽध्येतव्यः। सायंप्रातिकी सन्ध्या पौनःपुनिकानि प्रगेत-नानि दोषातनानि च कर्मजदूषणान्यपाकृत्य स्वान्तेषु स्वच्छमुत्साहं वर्द्धयति, तथा च नव्यां भव्यां स्फूर्तिं जनयति। साम्प्रतिके वैज्ञानिके युगे 'राकेट' इत्याख्यस्य वायुयानविशेषस्य चन्द्रलोके वारद्वयमवतरणेन प्रत्यावर्तनेन च भूतले विज्ञानाम्बरमणिना बहुभासिते जगति वैज्ञानिकचमत्कृतिं भौतिकोपलब्धिमेव सर्वस्वं मन्यमाना विभिन्नजानपदीयसंस्कारैः सम्पृक्ता लोकरीतिभिर्भौगोलिकराजनैतिकधार्मिकास्थाभिर्दृढीभूताभिरुपचेतनाभिरुपचिताः लोका धार्मिकभावनाया महाज्योतिष्प्रद्योतितोपासनापरम्परावृतं भारतीयदर्शनं ज्ञानविजृम्भण-मात्रमेव ब्रुवाणाः प्राप्यन्ते। परमन्धकारावृतेषु गिरिगह्वरेषु भयावहेषु प्रकाण्डपादपपुञ्जेषु उत्तुङ्गशैलशिखरेषु उद्दामप्रवाहिणीनां नदीनां कूलेषु कान्तारेषु च, क्षीरप्रस्रविणीनां धेनूनां पुष्कलासु च सेवासु तल्लीनान् प्रत्यक्षोपलब्धिप्रदर्शनाभावापरान् स्वसनातनसंस्कृति-गुणान् बहूपहसन्ति एते खलु। अस्ति वैशिष्ट्यं भौतिकवस्तूनामिति को नाम न जानाति? अतः स्वाभाविकी प्रवृत्तिर्मानवानां भौतिकसुखोपलब्धये। परं येषां निष्ठा 'तस्य भासा सर्वमिदं विभाति' इत्यादिवचनेषु दृढीभूता, तथा च तेषां चरमलक्ष्यं न भौतिकम्, अपि तु परमात्मदर्शनं मोक्षोपलब्धिर्वेति, तस्या एव वैदिकविचारधाराया ब्राह्मणविचारधाराया वोद्भवविकासयो-र्विषये संक्षेपेण लिख्यते।

धर्माणामितिहासो विविधासु वेलासु प्रादुर्भूतानां विभिन्नानां क्रियाप्रतिक्रियाणां सजीव इतिहासो वक्तुं शक्यते। यस्मिन् काले आर्याः स्वसांस्कृतिकविकाससोपाने समारूढा आसन्, तदैव सामाजिकानां मनस्सु क्रियात्मकाः प्रतिक्रियात्मकाश्च विचारधारा अविद्यन्त। उक्तञ्चापि—

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तं कथायुक्तमितिहासं प्रचक्षते ॥

अतोऽस्माकं ब्राह्मणविचारधारा अपि धर्मार्थकाममोक्षात्मिका एव ।

ऋग्वेदो विश्ववाङ्मये प्राचीनतमो ग्रन्थ इति समाहितमतीनां सर्वसम्मतं मतम् । ऋग्वेदस्याध्ययनमिदं पुष्णाति । ऋग्वेदे सूक्तानि बहुलानि लभ्यन्ते, यत्रेन्द्रावरुणौ समकक्षौ सम्राजौ देवौ दीव्यतः । अनेनेदं विज्ञायते यद्धि तस्मिन् काले विभिन्ना अपि दीव्यन्त्यो विचारधारा एकस्यां विचारधारायामगूहन् । शनैः शनैर्भूतानि प्रचुराणि परिवर्तनानि, तथा चार्याणां प्रमुखौ देवाविन्द्रावरुणावपि पृथग्भूतौ । परिणामतो वरुणोपासकानां सम्प्रदाय इन्द्रोपासकेभ्यः पृथग्भूत इव प्राप्यते । 'वरुणः प्रचेताः' तथा च प्रचेतसो मेधाप्यर्थः । इन्द्रावरुणयोर्विषये सायणभाष्यकारेण स्पष्टो भेदः प्रतिपादितः[1] । तथा च तैत्तिरीय-संहितायां[2] ताण्ड्यब्राह्मणे[3] तथा च तैत्तिरीय[4]ब्राह्मणेऽपि भेदपोषकानि वचनानि समुपलभ्यन्ते । [5]ऋग्वेदे तु स्पष्टतया वरुणो रात्र्यभिमानी, तथा चेन्द्रोऽहरभिमानीति स्वीकृतः । इन्द्रावरुणयो-र्युग्मदेवयोः स्तवनं बहुषु सूक्तेषु साधु प्राप्यते । यथेन्द्रविषये 'यथेन्द्रेण प्रकाशमानः सूर्यः समजायत इन्द्रः [6]सर्वश्रेष्ठस्तथा च न कोऽपि तस्मात्पूर्वं समभूत् । इन्द्रजन्मविषये ऋग्वेदस्य चतुर्थमण्डले अष्टादशसूक्ते वर्णितं यद्धि जातमात्र एवेन्द्रः स्वमातरमुवाच—नाहं सामान्य-जन इव जन्म प्राप्नोमि, यतो ह्यस्मान्मार्गादनादि[7]कालादेव जना जन्म लब्ध्वा वृद्धिं गताः । बलशालिनमिन्द्रं तस्य मातादितिः प्रत्युवाच—यत्सा तं सहस्रमासान्[8] वर्षाणि यावद् धारितवती ।

---

१. इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः ।
इरां दृणातीति निरुक्तकारः ।
अहरभिमानी देव इन्द्रः ।
वृणोति पापकृतः स्वकीयैः पाशैरावृणोति । रात्र्यभिमानी देवो वरुणः ।

२. "मैत्रं वाहर्वारुणी रात्रिः"—तै० संहिता २,१,७,३ ।

३. "अहोरात्रे वै मित्रावरुणौ"—ताण्ड्यब्रा० २५,१०,१० ।

४. "वारुणी रात्रिः"—तैत्तिरीयब्रा० १,७ ।

५. "तमस्य राजा वरुणः । मित्राय अहरभिमानी देवतायै वरुणाय रात्र्यभिमानी देवतायै"—ऋ० १।१२७।३।

६. "तदिदास भुवनेषु ज्येष्ठम्"—ऋ० १०।१२०।१ ।

७. अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्तविश्वे ।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥ ऋ० ४।१८।१ ।
नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि । ऋ० ४।१८।२ ।

८. किं स ऋधक् कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः० । ऋ० ४।१८।४८ ।

समुद्भूते सत्येवेन्द्रः प्रोवाच मातरम्—"क[1] उग्राः"? माता प्रत्युवाच–"अर्णनाभः महिश्रवादयः सन्त्यनेके साहाय्यमपेक्षमाणाः"। इन्द्रावरुणयोर्वैषम्यं प्रकटनार्थमुद्धरणानि निम्नानि दीयन्ते। यतो हीन्द्रो [2]वृत्रहन्ता स्तुत्यो दुर्गभेदको मेधावी, वरुणश्च धृतव्रतः कर्मपालकोऽन्यत्र च [3]सहस्रधनप्रदातृषु श्रेष्ठत्वमिन्द्रस्य तं सुक्रतुं[4] वरुणं तु मायिनं वरुणो राजा [5]सुर्याणि प्रथमा धारयन्तः। विभिन्नानां जलोदरादिरोगाणां पापानां च विनाशाय पाशकर्तनाय च वरुण एवोपासितः। नव्यानां वस्तूनामुपलब्धये तेषां संरक्षणाय चेन्द्र एव सम्यगुपासितः[6]।

इन्द्रस्य शत्रुसंहारकत्वं[7] वरुणस्य च प्रजानां धारकत्वमेकत्रैव वर्णितं प्राप्यते, तथा च वरुणः शीघ्रगमनेच्छया [8]रात्रीदिनेभ्यः पृथक् कृतवान्। वरुणः तमस्य [9]राजा। तथा च दर्शनीयो [10]वरुणो रात्रिभिः प्राप्यते। एकस्तु [11]स्वराऽन्यस्तु स्वराडिति। इन्द्रावरुणौ सम्राजौ[12] निगदितौ। इन्द्रः सदैव देवपदेनाभिहितः, परं वरुणः [13]असुरप्रचेतेति वर्णितः। एष एव असुरशब्दः 'आहुरमजाद' इति शब्देन विकृतिं लब्धो यतो हि सुरासुरपरम्परायाः प्रतीक-रूपेणैव (आहुरमजाद तथा आरमजद) इत्यस्य विवेचनं सेक्रेडबुक आफ दी ईस्ट[14] इत्याख्यास्य नवमे भागे स्पष्टतया वर्णितम्, यतो हि (सुरः) आरमजाददेवत्वशक्तिप्रेरको लाभप्रदो वर्णित इन्द्ररूपेण। तथा चाहुरमजाद इत्याख्यो वरूणो मायावी विपरीतगुण-गरिम्णालंकृतः सम्यगुल्लिखितः, आहुरमजाद इत्याख्यस्तमसां देवः, अतो भूतकालिकघटनानां वेत्ता, परम् (आरमजार) इत्याख्यः सात्त्विकगुणयुक्तो भविष्यद्द्रष्टा वेत्ता च वर्णितः। इत्थमिद्रा-वरूणयोर्विस्तरेण विवेचनस्थानकालापेक्ष्यम्, अतः संक्षेपेणास्य निदर्शनं चिकीर्षे। ऋग्वेदस्य

---

१. जज्ञानो नु शतक्रतुर्विपृच्छति मातरम्—क उग्राः केह शृण्विरे आदिशवस्य ब्रवीदौर्णवाभ महीश्रवन्। ते पुत्र सन्तु निष्ठुरः। ऋ० ८।७७।१।
२. वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभिरक्षते सदा। ऋ० ७।८३।९।
३. इन्द्रः सहस्रदाम्नां वरुणः शंस्यानाम्। ऋ० १।१७।५।
४. तं व इन्द्रं न सुक्रतुं वरुणमिव मायिनम्। ऋ० ६।४८।१४।
५. अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमाधारयन्तः। ऋ० ४।४२।२।
६. इन्द्रो वृधामिन्द्र इन्मेधिराणमिन्द्रः। क्षेमे योगे हव्यइन्द्रः। ऋ० १०।८९।१०।
७. कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो प्रतीनि हन्ति। ऋ० ७।८५।३।
८. सर्गो न सृष्टो अर्वती ऋतायञ्चकार महीरवनीरहभ्यः। ऋ० ७।८७।१।
९. तमस्य राजा वरुणः। ऋ० १।१५६।४।
१०. स क्षपः परिषस्वजे न्यु स्रो मायया दधे स विश्वं परिदर्शतः। ऋ० ८।४१।३।
११. सम्राऽन्यः स्वराऽन्य उच्यते वां महान्ताविन्द्रावरुणमहावसू। ऋ० ७।८२।२।
१२. इन्द्रावरुणोरहं सम्राजोरेव आवृणे। ऋ०
१३. असुरप्रचेता। ऋ० १।२४।१४।
१४. सेक्रेड बुक आफ दी ईस्ट, वोल्यूम ९, पृष्ठ ५६६।

प्रथममण्डले चतुर्विंशतिसूक्तादारभ्य त्रिंशत् सूक्तं यावत् सन्त्यनेकान्याख्यानि तेषु। शुनःशेप इत्याख्यानमुदाह्रियते। शुनःशेप इत्याख्याने सम्बद्धाः सप्तशतोत्तर[1] ऋचः प्राप्यन्ते। तत्र वरुणात् पाशमुक्त्यर्थमेव स्तवनं लभ्यते। परं शुनःशेपस्य मुक्तेः कथान्य[2]त्रापि प्राप्यते। [3]ऐतरेयब्राह्मणेऽपि विस्तरेणास्याः कथाया वर्णनं विद्यते। कथाया सार इत्थं वरीवर्तते—ऐक्ष्वाको राजा हरिश्चन्द्रो निःसन्तानो नारदेन वरुणं स्तोतुं विज्ञापितः। स राजा वरुणमभितुष्टाव, तथा च प्राप्ते पुत्रे तेनैव तस्य यज्ञं कर्तुं प्रतियज्ञे। राजा हरिश्चन्द्रो वरुणप्रसादात्, पुत्रमवाप्य हर्षनिर्भरेण स्वान्तेन वरुणाय समर्पयितुं पराङ्मुखो बभूव। रोहितः पुत्रो वृत्तं सभयं च विज्ञाय पितुरुपेक्षां विधायारण्ये चचार। परिणामतो वरुणः क्रुद्धो भूत्वा हरिश्चन्द्रं जलोदररोगेणाक्रान्तं चक्रे। अतो रोहितो ग्रामं प्रत्यागन्तुमनेकवारं प्रयतमानोऽपि इन्द्रेण निषिद्धः। षष्ठे वर्षे परिभ्रमन् स रोहितोऽजीगर्तं वीक्ष्य तस्य त्रिषु पुत्रेषु (शुनःशेप, शुनः लांगूल, शुनःपुच्छ) इत्यादिषु एकं पुत्रं याचयामास। वरुणोऽपि क्षत्रियाद् श्रेष्ठ ब्राह्मणं ज्ञात्वा तं रोहितस्य स्थाने स्वीचकार। तस्य पिता एव शतगवां लोभेन तं विशसनार्थमप्युद्यतः। तदा शुनःशेपः स्वरक्षार्थं प्रजापतिं वरुणं तथा चान्यान् देवान् प्रार्थयामास, परं प्रीत इन्द्र एव तस्मै हिरण्यरथं ददौ, तथा च तदैव वरुणः प्रकोपरहितो भूत्वा जलोदरमपहृत्य सहैव च शुनःशेपस्य पाशान्मुक्तिरपि कृतवान्। एतदेवाख्यानमन्यग्रन्थेषु शांखायनश्रौतसूत्रे, हरिवंशपुराणे, ब्रह्म-वायु-भागवतदेवीभागवतपुराणेषु सामान्येन परिवर्तनेन वर्णितमस्ति।

उपर्युक्तविवरणेन कथाया अध्ययनस्यास्मिन्निन्द्रवरुणयोः प्रसंगे एषोऽस्ति निष्कर्षो यद् यदापि रोहितो वरुणप्रकोपपीडितं स्वतातं हरिश्चन्द्रराजानं प्रत्याग[4]न्तुमैच्छत्, तदैवेन्द्रः पुरुषरूपेण

---

१. शुनःशेपो यमह्वद्गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु।
शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः।
अवैनं राजा वरुणो ससृज्याद्विद्वाँ अदब्धो विमुमोक्तु पाशान्। ऋ० १।२४।१२-१३।
ऋ १–२४ सूक्ततः समारभ्य ३० सूक्तं यावत् १०७ ऋचः।

२. प्राचीन् संस्कृत साहित्य का इतिहास ( मैक्समूलर ) पृ० २१५–२२१
ऋग्वेदिक लीजेन्डस थ्रू दी एजेज, पूना सं० १९५३, पृ० १८४–२४०
( डा० एच० एल० हरियप्पा )

३. ऐतरेयब्राह्मणपञ्चिका ७।१५।

४. अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु रोहितः शुश्राव सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ··· ··· षष्ठं संवत्सरमरण्ये चचार ······ सोऽजीगर्तं ······ ऐत० ब्रा० ७।१५।

पर्येत्य तं निषेधितवान् । सोऽपि भ्रमन् षष्ठे वर्षे अजीगर्तमधिगम्य स्वस्थाने वरुणाय बलिप्रदानाय तस्य पुत्रं शुनःशेपं प्राप्तवान् । वरुणोऽपि क्षत्रियापेक्षया ब्राह्मणं हर्षेण स्वीचकार । परं शुनःशेपस्य बलिप्रदानाय न कोऽपि समुद्यतः, तदा तस्य पितैव[1] तं मानुषरूपेण विशसितुमुद्यतो बभूव । शतगवां लोभेन तस्मिन् काले बहूनां देवानां स्तवनान्तेऽपीन्द्र एव प्रसन्नो भूत्वा तस्मै हिरण्यरथं ददौ[2], तथा च सहैव तस्य वरुणपाशान्मुक्तिः, तथा च तस्य पितू राज्ञो हरिश्चन्द्रस्य जलोदररोगोऽपि दूरीभूतः । अनेन एष एव निष्कर्षो यदिन्द्रवरुणयोः पारस्परिकविरोधः सामान्यतया दृढीभूतः । पुनरपि यदा शुनःशेपो विश्वामित्रस्याङ्के विराजितो बभूव, तदा देवरातविश्वामित्र इति नाम्ना प्रथितो विश्वामित्रेण महर्षिणा मन्त्रादिभिः पूतः पुत्रत्वमापन्नः, तथा च विश्वामित्रोऽपि तं पुत्ररूपेण स्वीकृत्य स्वपुत्रेषु ज्येष्ठं दायाधिकारिणञ्चकार । विश्वामित्रस्य मधुच्छन्दसः पञ्चाशताज्यायोभिर्बहुचर्चितो बहुश्रुतः श्रवस्तमः पिता विश्वामित्रो गर्हितः । तदा विश्वामित्रस्तान् शशाप । शापेन च ते आन्ध्र-पौण्ड्र–पुलिन्दादिदस्युजातित्वमापन्नाः संजाताः ।[3]

[4]वशिष्ठागस्त्ययोरुत्पत्तिविषये ऋग्वेदे स्पष्टतया वर्णनमुपलभ्यते । यतो हि मित्रावरुणयो रेतसा स्खलितेन कुम्भे जले स्थले पतनादेव जन्म सञ्जातम् । भरताः ( तत्सुराजानः ) अल्पसंख्यका एवासन्, परं वसिष्ठस्य पौरोहित्येन तेषां सन्ततेर्वृद्धिर्भूता । यतो हि ते वसिष्ठगोत्रा

---

१. "उवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताऽहमेनं विशसिष्यामीति ।
शुनःशेप ईक्षाञ्चक्रे मानुषमिव वै मा विशसिष्यति, देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः · · · · · "
( ऐतरेयब्रा०, ७ पं० १६ )

२. "तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ" —
( ऐत० ब्रा० पं० ७।१६ )

३. "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः, पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत् कनीयांसस्तद्ये ज्यायांसो न ते कुशलं मेनिरेताननुव्याजहारान्तान्वः प्रजाभक्षीष्टेति त एतेऽन्ध्राः, पुण्ड्राः, शबराः पुलिन्दाः" —
( ऐ० ब्रा० ७।१८ )

४. उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ॥ ऋ० ७।३३।११
यमेन ततं परिधिं वयिष्यन्नप्सरसः परिजज्ञे वसिष्ठः ॥ ऋ० ७।३३।१२
सत्रेह जाता बिषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् ।
ततो ह मान उदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ॥१३
विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्वा विश आजभार ॥ ७।३३।१०

इन्द्रमनयन्[1]। इन्द्रः सुदासं रक्षितवान्, तथा च सुदासो वसिष्ठपुत्रान् वारुणीविचारयुतान्निन्द्र-साहाय्येन जघान। ऋग्वेदे सप्तममण्डलस्यान्तिमसूक्तस्य विवरणे बृहद्देवताग्रन्थे विवेचनमिदं साधु स्पष्टं विहितम्। सामान्यतया वसिष्ठस्य पुत्रा न राक्षसत्वमापन्नाः, अपि तु तेषां विचारधारा रात्रिप्रधानस्तुतिकारणाद् विनाशकर्मसु रता जाता, अतस्तेषां विनाशो भूतः। बृहद्देवताग्रन्थे सुदासेन वसिष्ठपुत्राणां विनाशविषये स्पष्टमुपवर्णितम्, तथा च वसिष्ठो महर्षिस्तेन सन्तप्तोऽपीन्द्र-मेव स्तौतीति।

ब्रह्मवाहः[2], ब्रह्मप्रियः[3], ब्रह्मद्विषः[4], देवयवः[5], देवनिदः[6], यज्ञकर्ता, यज्ञविरोधिनोऽय-[7]ज्वानः—इत्यादिशब्दैः स्पष्टरूपेण द्वयोर्विचारपरम्परयोः स्पष्टं रूपं स्थापयितुं शक्यते। देवकायः, देवयन्त इति पदैर्देवान् प्रीणयितुमिच्छवो महर्षयः ( साध्याः ऋषयः ) स्वैः श्रेष्ठैः कर्मभिः स्वर्गेऽप्सवोऽन्ये च यज्ञविरोधिन आसन्। इदमपि साधु ज्ञायते यदा कोऽपि[8] यज्ञविरुद्धो जनो यदि सुखसम्पन्नो भवेत्, तदा तु तस्य विनाशायापीन्द्रः स्तूयते। देवेष्वपि सत्या देवा अनृता[9] देवा इति पदैर्देवेष्वपि सत्त्वगुणप्रधाना, तमोगुणप्रधाना द्वे वृत्ती अहरभिमानीन्द्रो रात्र्यभि-

---

१. दूरादिन्द्रमनयन्ना सुतेन तिरो वैशन्तमति पान्तमुग्रम् ऋ० ७।३३।२
दण्डा इवेद्गो अजनास आसन् परिच्छिन्ना भरता अर्भकासः। ऋ० ७।३३।६

२. ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः।
हते पुत्रशते तस्मिन् सौदासैर्दुःखितस्तदा॥ बृहद्देवता ६।२८
हते पुत्रशते तस्मिन् वसिष्ठो दुःखितस्तदा।
रक्षोभूतेन शापात्तु सुदासेनेति वै श्रुतिः॥ बृहद्देवता ६।३४।

३. इमाः ब्रह्मवाहः कियन्तं आबर्हिः सीद। ऋ० १।४१।३

४. प्रसम्राजे बृहदर्चा गभीरं ब्रह्मप्रियं वरुणाय श्रुताम्। ऋ० १।८५।१

५. ब्रह्मद्विषे आधीवतु सललूकं चकर्थभ्यः। ऋ० १।३०।१७

६. नरो यत्र देवयवो मदन्ति। ऋ० १।१५४।५

७. देवनिदो ह प्रथमा अजूर्यन्। ऋ० १।५२।२
सरस्वति देवनिदो निर्वध्य प्रजाम्। ऋ० ६।६१

८. असुन्वन्तं जहि—ऋ० १।१७६।४
जघन्वान् इन्द्रः—अदाशुन् ( आदातृन् ) ऋ० १।१७६।६
यज्ञेन यज्ञमयजन्त देवाः··· साध्या ऋषयः। ऋ० १०।९०

९. यः कश्चिदहविर्महीयते। ऋ० १।१८२।३

१०. यदि वाहमनृतदेव आसमोघं। ऋ० ७।१०४।१४

मानी वरुण इति भेदं जनयतः। इन्द्रसत्ता[1]विरोधिन अपि प्राप्यन्ते। इन्द्रविरोधिपरम्परायाः पोषणार्थं सन्ति बहुलान्युदाहरणानि। अष्टममण्डलस्यारम्भ इन्द्रस्यैव स्तवनेन प्रारभ्यते।

इत्थं ब्राह्मणविचारधाराया बीजानि तत्र स्पष्टतया संनिहितानि। ऋग्वेदस्य स्तवन-परम्पराया विकसितस्वरूपेण यज्ञेनैव जनाः सर्वाण्यभीप्सितानि बाहुल्येन नाविन्दन्। स्वर्गेच्छुकानांः स्वर्गलोकप्राप्त्यर्थम् "यज्ञो वै विष्णुः" इति विचारधारा लोकं सम्यक्तयाभिभूत-मकरोत्। ब्राह्मणानां काले कर्मकाण्डस्य प्राधान्येन शतपथादिब्राह्मणेषु वर्णितेन यज्ञ-विधानेन धर्मस्य स्वरूपमतीव जटिलं जडीभूतञ्चाभवत्। उपनिषत्स्वेनां विचारधाराम्प्रति तीव्रा प्रतिक्रिया समुद्भूता तथा च तत्र शुद्धदर्शनस्य विकासः सञ्जातः।

संहिताकालीनविचारेषु विश्वासस्य प्राधान्यमासीत्। ब्राह्मणयुगीनविचारधाराया-माचारस्य प्रमुखता शीर्षस्था खलु जाता। परमुपनिषत्सु विचारपक्षस्य स्वकीयं नूतनं स्वरूप-मुदितं बभूव। आरण्यकेषु वैदिकविचारधायायां साधनाया उपासनायाश्च विविधरूपाणि विन्दामहे। अनेन वेदकालात् प्रभृत्येव वैदिकविचारधारा निर्दिष्टेन खलु मार्गेण स्वसर्वाङ्गीण-विकासमनुभवन्ती लोके विश्रुता जीविततत्त्वानुप्राणिता सर्वोत्कर्षेण देदीप्यमाना बभासते-तरां नितराम्।

परं यदा विकासे नयननिक्षेपं कुर्मस्तदा महाश्रमकृतं नैयमिकं बन्धनं यज्ञस्य कृते कृच्छ्रेण सम्पादितुं शक्यते स्मेति विषये यज्ञावसरेषु समुत्थितेषु सांवादिकेषु स्तैमित्यानुकरणेन जटिलता तीव्रवृद्धिंगता भूता। तथा च येन केन प्रकारेण पूर्णत्वं गतेऽपि यदि सामान्यापि त्रुटिः स्यात्, तदा सर्वमपि निष्फलं स्यादिति यज्ञकर्मणां फलेषु निष्ठाऽस्थिरत्वमापन्नेति ज्ञायते। यथाग्निहोत्रविधाने मुण्डकोपनिषदि[2] सुमिद्धावग्नावेवाहुतिं पातयेदिति नियमः। न केवलमित्येव, अपि त्वग्निहोत्रं कुर्वाणो जनोऽन्यानपि यज्ञान्[3] कुर्यादिति नियमः। अङ्गहीने तु

---

१. ददामि महीरनिन्द्राः। ऋ० १।१३३।४
नेन्द्रोऽस्तीति—

२. यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत्॥
(मुण्डकोपनिषद् २।२)

३. यस्याग्निहोत्रमदर्शपौर्णमास—
मचातुर्मास्यमनाग्रयणमतिथिवर्जितं च।
अहुतमवैश्वदेवमविधिना हुत-
मासप्तमांस्तस्य लोकान् हिनस्ति॥
(मुण्डकोपनिषद् २।३)

यज्ञे सर्वं व्यर्थतां गच्छेदिति। अग्निहोत्रिणः सप्तानपि लोकान्नाशयेत्, परं यदि महतायासेन यज्ञाः साधु सम्पन्नाः, तथापि ते अदृढा[1] एव। एते अष्टादशयज्ञा अप्यवरकर्माणि सन्ति यत्रोपासनारहितानां सकामकर्मणामेव वर्णनं विधीयते। अतोऽशक्यं संसारतरणमेभिर्यज्ञैरपि च साधारणदुःखानामपि पारमधिगन्तुं नालम्। अतो रहस्यमिदं विस्मृत्य विस्मयविमुग्धा ये यज्ञानेतानाचरन्ति स्म, तेऽपि जरामृत्युं पारयितुमशक्ताः। [2]सकामकर्मसु नियुक्तानामासीदेषावस्था।

एनां यज्ञानुमोदितां विचारधारां दर्शं दर्शं मानवो न भृशं प्रसन्नतां गतः। अत एव स्वाभाविकी प्रवृत्तिरितस्ततः परिभ्रमन्ती नव्यामौपनिषदीं षड्दर्शनानुमोदिताञ्च विचारसरणिं विगाहमाना मानवानां मनस्तोषाय पोषाय च विविधान् प्रयत्नान् समाचरन्ती विकासमार्गे प्राप्यते इति सुतरां सन्तुष्यतितरां च नितरामस्माकमन्तरगमिति शम्।

—:०:—

---

१. प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यान्ति॥
(मुण्डको० २-७)

२. अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्मिणो न प्रवेदयन्ति रागात्
तेनातुरा क्षीणलोकाश्च्यवन्ते॥
(मुण्डकोपनिषद् २।९)

# भारतीयपरिवेशे जीवनस्य चरमोद्देश्यम्

श्रीराजेश्वर उपाध्यायः, एम० एस-सी०, एम० एड०, साहित्याचार्यः
शिक्षासंकायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी

पुरा भारतीयजीवने धर्मस्य महत्त्वपूर्णं स्थानमासीत्। नेदमाश्चर्यं यदुदीयमानसन्तान-मानसे ईश्वरभक्तेर्धार्मिकतायाश्च प्रभावार्पणं शिक्षायाः परमोद्देश्यमासीत्। प्रारम्भिक्या-स्तथा समुन्नतायाश्च शिक्षायाः प्रारम्भे येषां संस्काराणां शिष्य-मानसे समारोपणव्यवस्था कृतासीत्, अध्ययनकाले येषां व्रतानां पालनं ब्रह्मचारिणां कृते आवश्यकमासीत्, सन्ध्या-पूजनधार्मिकोत्सवा ये प्रायः प्रतिमासमाचार्यगृहे पाठशालासु च सम्पन्ना भवन्ति स्म, समेषां केवलमिदमेव लक्ष्यमासीत् छात्रेषु ईश्वरभक्तेर्धार्मिकतायाश्च भावनापूरणम्। अस्या आध्यात्मिकपृष्ठभूमेरुद्देश्यमस्ति छात्रजीवने चित्ताकर्षकबाह्यवस्तुवैमुख्येन सद्वस्तुग्रहणे स्थैर्यापादनमिति। यस्मिन् परिवेशे छात्रा निवसन्ति स्म स तादृगासीद् यद् ब्रह्मचारिणां मानसपटे पारलौकिकवास्तविकतायाश्चित्रं निर्मिमीते स्म।

पुरातन्या भारतीयसंस्कृतेरिदं वैशिष्ट्यं यदियं राजनीतिकार्थिकदृष्ट्यपेक्षया धार्मिक-पक्षेणाधिकं प्रभावितासीत्। विद्याव्यसनं ज्ञानप्राप्तिश्च धर्मस्यैवाङ्गं बुद्ध्यते स्म। धर्म-मेवात्मसाक्षात्कारस्य जीवनपरमोद्देश्यभूताया मुक्तेः साधनमामनन्ति स्म। एतदेव डॉ० राधाकुमुदमुखर्जीमहोदयेन स्वविचारप्रकटनावसरे कथितम्:—

"Learning in India through the ages had been prized and pursued not for its owu sake, if we may so put it, but for the sake, and as a part of religion It was sought as the means of salvation or self-realization, as the means to the highest end of life, viz. Mukti or Emancipation."[१]

भारतीयपरम्परानुसारेण सकलाभीष्टसिद्धये श्रुतिर्धर्मानुष्ठानमेवादिशति। 'धर्मं चर' इति (तै० उ० १-११-१)।

1. Ancient Indian Education by R. K. Mookerji, 1947, p. xxi.

अयमनुष्ठेयधर्मस्त्रिधा । यथा गीतायां प्रतिपादितम् :—

"यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।" इति ( गी० १८-५ ) ।

यज्ञो दानं तथा तप एव बुद्धिमतो मनुष्यान् पुनन्ति ।

यज्ञोऽपि त्रिविधः—कर्मयज्ञः, उपासनायज्ञः, ज्ञानयज्ञश्च । कर्मयज्ञे अनन्तक्रियाणां पौर्वापर्येणानुष्ठानमनुष्ठेयकर्तव्यस्य स्मरणं च बोधितमस्ति । उपासनायज्ञाभावे वृत्तयो न शाम्यन्ति । ज्ञानयज्ञमुद्दिश्य बृहदारण्यकोपनिषदः मैत्रेयीब्राह्मणः प्रतिपादयति—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।" इति (२-४-६ ) । श्रवणमनननिदिध्यासनैरात्मसाक्षात्कारो विधेयः । ध्यानापरपर्यायो निदिध्यासनम् । ध्यानं च विशालयोगप्रासादस्य सप्तमः सोपानः । (योगाङ्गानि—'यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः" यो० द० २-२९ ) । अतो निश्चप्रचमिदं यद् योगाभावे ज्ञानयज्ञाद्यनुष्ठानमसम्भवि । त्रिविधयज्ञानां निष्पत्तिः केवलं योगमेवाश्रयति । तथा च याज्ञवल्क्यः—

यज्ञाचारदमाहिंसा दानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ इति ।
( या० स्मृ० १-८ )

यज्ञाचारदमाहिंसादानस्वाध्यायप्रभृतिकर्मणां परमं फलं योगद्वाराऽऽत्मदर्शनमित्यर्थः । अत्र परमधर्मसाधनत्वेन योगः प्रतिष्ठापितः ।

तथा च ऋक्संहिता—"यस्मादृते न सिद्ध्यति यज्ञो विपश्चितश्च न । स धीनां योगमिन्वति ॥" ( १-१८-७ ) । न च विदुषां योगं विना किमपि यज्ञकर्म सिद्ध्यति । यदा ज्ञानिनोऽपि योगाभावे न साफल्यमाप्नुवन्ति, तदा का वार्ताऽन्येषाम् ?

## को नाम योगः

को नाम योग इत्याकाङ्क्षायां 'युज् समाधौ' इत्यस्माद् धातोः घञि प्रत्यये योगशब्दः सिद्ध्यति । अत एव नात्र योगः संयोगः,' किन्तु समाधिः । महर्षिपतञ्जलिनापि स्वनिर्मितयोगसूत्रे निरूपितम्-'योगश्चित्तवृत्तिनिरोधः" इति ( योगदर्शनम् १-२ ) । चित्तवृत्तीनां निरोध एव 'योगः' इत्युच्यते । वृत्तयश्च पञ्चप्रकाराः । तद्यथा :—प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिरूपाः ( यो० द० १-६ ) । प्रमाणं च यथार्थज्ञानम्, मिथ्याज्ञानं विपर्ययः, विषयशून्यज्ञानं विकल्पः, निद्रा स्मृतिश्च प्रसिद्धे एव ।

चित्तवृत्तिनिरोधः, चित्तैकाग्रता, समाधिः योगश्च समानार्थकाः। चित्तैकाग्रतां विना जगति न किमपि कार्यं सुचारु निष्पद्यते। चित्तचाञ्चल्ये विकासक्रमावरोधः सुनिश्चितः। चित्तैकाग्रता एव विनाशं विकासे परिवर्तयति। महर्षीणां याः काश्चिदुपलब्धयस्ताः सर्वा एकाग्रतयैव। अद्यतनो नवो नवो न्यूटनप्रभृतीनां वैज्ञानिकाविष्कार एकाग्रताया एव परिणामः। अतः स्पष्टमेतद् यद् जीवनस्य प्रतिक्षेत्रं साफल्यमाप्तुं चित्तवृत्तिनिरोध एव शरणम्। डॉ० मुखर्जीमहोदयेनापि भारतीयशिक्षाया उद्देश्यमनुकथितम्[1]—
"Thus the aim of education is Chittavritti Nirodha" इति। शिक्षाया उद्देश्यं चित्तवृत्तिनिरोध एव।

योगो ह्ययं द्विप्रकारः—सम्प्रज्ञातः, असम्प्रज्ञातश्च। चित्तावस्था अपि पञ्चधाः—मूढक्षिप्त-विक्षिप्तैकाग्रनिरुद्धरूपाः। तमोगुणप्राबल्येन मोहापन्नस्य मनसो दशा मूढावस्था। रजोगुण-प्राधान्ये चित्तस्य चञ्चला स्थितिः क्षिप्तावस्था। कदाचित् सत्त्वगुणाविर्भावेण चित्तं कियत्कालं वृत्तिशून्यं जायते, स्थितिरियं विक्षिप्तावस्था। चित्तस्यैकाग्रयभूमौ सम्प्रज्ञातसमाधिरुदेति, तथा सर्वा वृत्तयः अवरुद्धा जायन्ते, केवलं ध्येयाकारावृत्तिरेवावशिष्यते। परं वैराग्येण यदा ध्येयाकारवृत्तिरपि निरुध्यते चित्तं च सर्वथा निर्वृत्तिकं तिष्ठति, तदानीं संस्काररूपेण ता अवशिष्यन्ते। दशेयमसम्प्रज्ञातसमाधिः। निरोधभूमिरपि सैव।

## चित्तवृत्तिनिरोधोपायः

अथ तन्निरोधोपाय उच्यते "अभ्यासवैराग्याभ्यां तन्निरोधः" (योगदर्शनम् १-१२)। अभ्यासवैराग्ये मिलिते एव चित्तवृत्तिं निरुन्धः, न पार्थक्येन। यतः चित्तनदीप्रवाहः प्रपञ्चमोक्षयोरुभयोरपि धारयोः प्रचलति। प्रपञ्चोन्मुखीं धारामवरोद्धुं वैराग्यम्, कैवल्याभिमुखीं धारां प्रवाहयितुमभ्यासश्चावश्यकः। पुरुषस्य स्वरूपावस्थितिरेव समाधेः फलम्, स्वरूपावस्थितये प्रयत्न एवाभ्यासः, ऐहिकामुष्मिकविषयेष्वनासक्तिरेव वैराग्यम्। इदमेवापरं वैराग्यम्। महर्षेः पतञ्जलेर्मतानुसारं पूर्वमपरवैराग्यम्, ततोऽभ्याससाहाय्येन सम्प्रज्ञातसमाधिः, तदनन्तरं परिपाकावस्थायां विवेकख्यातिरुत्पद्यते। विवेकख्यातिः—प्रकृतिः जडा, परिणामिनी च, तद्भिन्नोऽसङ्गोऽपरिणामी चिद्रूप आत्मा। विवेकख्यातिरपि त्याज्या, यतो हि गुण-परिणामभूता। सात्त्विकत्वेऽपि रजस्तमःसम्पर्कात् तस्या दुःखमयत्वं मोहमयत्वं च। विवेकख्यातावप्यरुचिः परवैराग्यम्। तदुदयेन विवेकख्यातिरवरुध्यते। ततः सर्ववृत्तिनिरोध-

---

1. Ancient Indian Education by R. K. Mukherji, 1947, p. xxii

रूपोऽसम्प्रज्ञातसमाधिर्लभ्यते। निष्कर्षोऽयं यत् तावदेव चित्तं प्रसरति, यावद् भोगापवर्गौ न लभ्येते। अपवर्ग एव विवेकख्यातिः। सैव चित्तवृत्तेश्चरमा सीमा। अस्यां चित्तं सर्वथा निश्चेष्टं जायते। तदा विषयाकारचित्तवृत्तिरूपविक्षेपाभावेन नितरां पुरुषस्य स्वस्वरूपावस्थितिर्भवति। उक्तं हि "तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो० द० १-३)। स्वरूपावस्थितिरेव योगस्य चरमं फलम्।

मनस एकाग्रतायै योगदर्शने ये उपाया उपवर्णितास्त एव भगवता कृष्णेनार्जुनं प्रति बोधिताः—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ इति।

(गीता ६-३५)

महर्षिणा वशिष्ठेनापि दुर्निग्रहं मनो निरोद्धुं चत्वार उपाया निर्दिष्टाः। तद्यथा—१-अध्यात्मविद्याधिगमः, २ साधुसङ्गमः, ३-वासनासंपरित्यागः, ४-प्राणस्पन्दनिरोधनञ्च। मनो वशीकर्तुं प्रथम उपाय अध्यात्मविद्याया अध्ययनम्। अध्यात्मविद्याध्ययनेन लाभोऽयं यदनात्मपदार्थेषु आत्मबुद्धिनिरसनम्, तथा शुद्ध-बुद्धनिर्विकारनित्यपरमानन्दस्वरूप-परब्रह्मातिरिक्तसर्ववस्तुनोऽनित्यताप्रतीतिः। एतेन समस्तदृश्यजगतो मिथ्यात्वम्, तथा दृक्शक्तिरूपपरब्रह्मणः परमार्थसत्त्वं बोद्धुं साहाय्यं प्राप्यते। श्रुतिषु ब्रह्म मनसोऽगोचरं निरूप्यते—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै० उ० २-४) इत्यादिषु। अतो मनस्ततोऽर्वागेव तिष्ठति, इतः सांसारिकविषयाणां मिथ्यात्वज्ञानेन ततो विरक्तिर्जायते, ततः तेषु शश्वन्मनोऽनाकृष्टं सम्पद्यते। एवं सांसारिकविषयेभ्यो मनसः पराङ्मुख्यं तथा ब्रह्म-पर्यन्तं तस्यागतिकस्थितिः, तदा यथा इन्धनाभावे वह्निः स्वयमेव शाम्यति, एवं मनसोऽपि निर्विषयत्वेन स्थिरत्वमेवापतति। अतो मनो निरोद्धुं प्रथम उपाय अध्यात्मविद्याधिगमो निरूपितः।

द्वितीय उपायस्तु साधुसङ्गमः। यतो हि साधवो भूयो भूयोऽध्यात्मविद्यामेव चर्चन्ति, तस्याः पुनः पुनः श्रवणेन मन्दमतिरपि पुरुषोऽध्यात्मविद्यां हृद्गतां करोति। कतिपये जना महात्मनां समीपं गन्तुं ह्रियमनुभवन्ति, एवं विधानामहङ्कारसम्पन्नानां कृते मनो वशीकर्तुं तृतीय उपायः 'वासनासंपरित्यागः'। जन्मान्तरेषु उपभुक्तविषयाणां संस्काराः

( सूक्ष्मवासनाः ) अन्तःकरणे स्थिरास्तिष्ठन्तीति । तेषां ततोऽपवाहनं स्यात्, तदाऽवश्यं मनस ऐकाग्र्यं सम्पद्येत । वासनाभिरेव मनश्चाञ्चल्यमुत्पाद्यते । तासां समूलोन्मूलनेन मनः-स्वतः शान्तिमुपैति । चतुर्थोपायस्तु प्राणस्पन्दनिरोधः । यदि वासनानां परित्यागः सुतरां न सम्पद्यते, तदा प्राणस्पन्दनानि निरोद्धुं प्रयतितव्यम् । यावन्मनसो वासनानां निस्सारणं न जायते, तावत् चित्तशान्तिरसम्भवा । प्राणस्पन्दनमपि चित्तप्रेरकम्, तेनैव चित्तं गति-मवाप्नोति । अतः प्राणस्पन्दनिरोधेन गतिविहीनं चित्तं स्थैर्यं लभते ।

चित्तं तदेव यस्मिन् विषयचिन्तनं जायते । यदा चित्ते चिन्तनमेव नास्ति, तदा तत् चित्तमेव न भवति, अन्वर्थताराहित्यात् । चिन्तनमपि तावदेव भवति यावत् प्राणानां स्पन्दनं तथा वासनानां सञ्चारो जायेते । प्राणस्पन्दने वासनासञ्चारे चावरुद्धे चिन्तनमप्यवरुद्धं जायते, तदानीं चित्ते स्थैर्यमायाति । अयमेव विषयो वृक्षरूपकनिदर्शनेन प्रतिपादितः—

द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥
प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥
असङ्गव्यवहारित्वाद् भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद् वासना न प्रवर्तते ॥

चित्तवृक्षस्य द्वे बीजे—प्राणस्पन्दनं वासना च । द्वयोरेकतरस्मिन् नष्टे द्वयोरपि नाशः सञ्जायते । कार्यस्य कारणसत्त्वनियमात् । सत्येव बीजे अङ्कुरोत्पत्तिर्जायते, नान्यथा ।

## द्वयोर्बीजयोः कथं नाशः ?

प्रश्नस्यास्य समाधाने प्राणस्पन्दनिरोधाय पञ्चभेदा उपायाः प्रदर्शिताः – प्राणायामः, दृढाभ्यासः, गुरुनिर्दिष्टा युक्तिः, आसनं युक्ताहारश्च । एतेषामुपायानां परस्परं दृढः सम्बन्धः । एते प्रायः सिद्धान्तापेक्षया प्रयोगसापेक्षाः । वासनानिरोधायापि त्रय उपायाः— असङ्गत्वम्, प्रपञ्चे अनित्यभावनायाः, द्वैतस्य च परित्यागः, शरीरस्य नश्वरत्वबुद्धिः । असङ्गत्वेनासक्तिरहितव्यवहारः प्रदर्शितः । रागद्वेषादिक्लेशाः सङ्गदोषेणैवोत्पद्यन्ते, ये बन्धनकारणम् । आसक्त्या सांसारिकपदार्थोपभोगेन संस्कारस्य वासनानां चोत्पत्तिर्जायते । अत एव अम्भसि पद्मपत्रवत् सङ्गरहितेन सांसारिकव्यवहाराणां निर्वाह उपदिष्टः । तृतीयो-पायस्तु शरीरनश्वरतायां दृढो विश्वासः । उक्तं चाभियुक्तैः—

अनित्यानि शरीराणि विभवो नैव शाश्वताः ।
सदा सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥

अन्यच्च "असारोऽयं संसारः क्षणभङ्गुराः प्राणाः" एवंविधानां भावनानां जागरणेन वासना नश्यन्ति । यदा उपरि निर्दिष्टोपायैः प्राणस्पन्दनानि वासनाश्च निरुध्यन्ते, तदा मुमुक्षुरसङ्गः सन् जगति यथेच्छं विचरति ।

## योगाभ्यासस्य मूलाधारः संयमः

नायं वासनानिरोधः सुतरां जायते, एतदर्थं योगाभ्यासो विधेयः । योगाभ्यासस्य मूलाधारः संयमः । अतः संयमिना सता योगः साधनीयः । योगसाधनेन मनोबलमुपलब्धुं प्रयतनीयम्, तदा जगति किमपि कार्यं दुःसाध्यं न जायते । परमार्थतस्तु ये जितेन्द्रियाः संयमिनश्च ते एव जगति विजयं लब्धुं प्रतिजानन्ति । असंयमिनां तु मन एव स्थिरं न भवति, मनसः स्थैर्याभावे कार्ये साफल्यमपि दुःशकम् । अतः अभ्युदयनिःश्रेयससिद्धये संयमो नितरामावश्यकः । योगशास्त्रं निर्दिशति—"त्रयमेकत्र संयमः" ( यो० द० ३-४ ) । एतत्सूत्रप्रणयनात् प्राग् विभूतिपादे—

"देशबन्धश्चित्तस्य धारणा" ( यो० द० ३-१ ) ।
"तत्र प्रत्ययैकतानता ध्यानम्" ( यो० द० ३-२ ) ।
"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" (यो० द० ३-३) ।

महर्षिणा पतञ्जलिना ध्यानधारणासमाधीनां निरूपणं कृतम् । तदनन्तरं "त्रयमेकत्र संयमः" इदं सूत्रमुल्लिखितम् । कस्मिंश्चिद् विषये धारणा-ध्यान-समाधीनां योजनमेव संयमः । एवं त्रयाणामेकस्मिन्नेव लक्ष्ये संयोजनशक्तिरेव संयमः कथ्यते । संयमस्य फलमिदम्—
"तज्जयात् प्रज्ञालोकः" ( यो० द० ३-५ ) ।

संयमजयेन बुद्धेर्नैर्मल्यम्, तथा सत्त्वसाम्राज्यं जायते, ततो ध्येयः सर्वथा ध्यातुर्वशमायाति । संयमेन योगाभ्यासे साफल्यम्, तेनात्मसाक्षात्कारपुरस्सरं ब्रह्माण्डस्य निखिलतत्त्वानां ज्ञाने साफल्यमायाति ।

## अन्यत्र वर्णितानि लक्ष्यसिद्धिसाधनानि क्रमाश्च

वेदान्तदर्शनेऽपि जीवनस्य परमलक्ष्यप्राप्तेः चत्वारि साधनानि निरूपितानि—विवेकः, वैराग्यम्, शमदमादिषट् सम्पत्, मुमुक्षुत्वं च (वे० सा०-४) । चतुर्षु भेदेष्वपि परमार्थसत्त्वं बोधयितुं चत्वारि महावाक्यानि उपदिष्टानि—

"प्रज्ञानं ब्रह्म" ( ऋग्वेदः )
"अहं ब्रह्मास्मि" ( यजुर्वेदः )
"तत्त्वमसि" ( सामवेदः )
"अयमात्मा ब्रह्म" ( अथर्ववेदः )

अनेन प्रकारेण जीवनस्य परमोद्देश्यं व्यष्टेः समष्टौ विलयनमेव। इदमेवात्मज्ञानं तथा आत्मसाक्षात्कारनाम्ना व्यपदिश्यते।

बृहदारण्यकोपनिषदि याज्ञवल्क्यमैत्रेयीसंवादेनेदं[1] प्रतीतिपथमवतरति यद् जगति मार्गद्वयमेव—प्रवृत्तिमार्गो निवृत्तिमार्गश्च। तत्राद्यो बन्धनकारणम्, चरमस्तु मुक्तिमार्गः। अनयोर्मार्गयोरेव व्यवस्थितिं निर्मातुं शास्त्रकारैर्जीवनकालः चतुर्षु भागेषु विभक्तः। ये चत्वार आश्रमाः कथ्यन्ते—ब्रह्मचर्यम्, गार्हस्थ्यम्, वानप्रस्थः, संन्यासश्च। प्रवृत्तिप्रधानो गृहस्थाश्रमः, अतस्तस्मिन्नाश्रमे व्यवहारसाधुतायै ब्रह्मचर्याश्रमस्यावश्यकता। निवृत्तिप्रधानस्तु संन्यासाश्रमः, तत्र व्यवहृतिसौष्ठवाय वानप्रस्थाश्रमस्य व्यवस्था कृतास्ते। एषामाश्रमव्यवहाराणां साधुपरिपालनेन मानवानां कल्याणावाप्तौ न कोऽपि सन्देहः। नियमत आश्रमधर्माणामपालनेनैवाद्यत्वे जगति परितोऽशान्तेः साम्राज्यं प्रसरति। ब्रह्मचर्यावस्थायामेव भाविनो गृहस्थाश्रमस्य सुदृढशिलान्यासो विधीयते। एवमेव चतुर्थाश्रमस्य शिलान्यासं सुदृढं विधातुं वानप्रस्थाश्रमो विहितः। तात्पर्यमिदं यद् ब्रह्मचर्याश्रमो वानप्रस्थाश्रमश्च तदुत्तरवर्तिनोराश्रमयोः कर्तव्यशिक्षा लाभस्य केन्द्रभूतौ। गार्हस्थ्यं संन्यासाश्रमश्च स्वपूर्ववर्त्याश्रमयोर्लब्धायाः शिक्षाया व्यावहारिकरूपतासम्पादकौ। भारतवर्षस्य निरतिशयोऽयं शिक्षाक्रमो यद् जीवनस्तरं क्रमशः उत्थापयितुमेते आश्रमा महत्वपूर्णाः सोपानाः।

## लक्ष्यसिद्धौ स्वस्थवातावरणमपेक्षणीयम्

इदानीन्तने युगे एवंविधव्यवस्थायां महान् व्यतिक्रमो दृश्यते। क्वास्ति स उपदेशः, यं गुरुर्विद्यासमाप्त्यनन्तरं शिष्येभ्यः प्रयुंक्ते—"मातृदेवो भव पितृदेवो भव। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि" ( तै० उप० १-११-२ )। इयमस्माकं पुरातनी शिक्षा-पद्धतिः।

---

१. बृ० उ०, २-४-१।

आधुनिकाः शिक्षिता युवानः "महाजनो येन गतः स पन्थाः" इति वाक्यमादर्शभूतं मत्वा कथयन्ति यदस्माकं गुरव एव यद्येवमाचरन्ति, तदास्माकमिदं किमकृत्यम् ? किन्तु ते न जानन्ति यदेभिर्वाक्यैकदम्बकैर्गुणग्रहणमात्रमेवोपदिष्टम् ।

वातावरणमेवैतादृशं यन्मानवो बाहुल्येन दोषग्रहणे एव प्रवर्तते, न गुणग्रहणे । महात्मनो बोध्यस्य गुणग्राहकतया इयं शिक्षा ग्रहीतुं शक्यते यद् राज्ञो नहुषस्य प्रश्नोत्तरेण तेन कथितम् —

पिंगला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम ॥

( म० भा० शा०, अ० १७८ )

महात्मना बोध्येन वेश्यात इयं शिक्षा लब्धा यत्—"आशा हि परमं दुःखं नैराश्यं परमं सुखम्" इति ( श्रीमद्भा० ११-८-४४ ) ।

अन्येषामपि दुर्वृत्तानां गुणा एव तेन गृहीताः, न च दोषेषु दृष्टिपातोऽपि विहितः ।

मानवो वातावरणेनावश्यमेवाक्रान्तो जायते, किन्तु पशुतुल्यं तद्दास्यं न स्वीकरोति । भौतिकमाध्यात्मिकं चैतद् द्वयं मनुष्यस्य वातावरणम् । अतो मनुष्यजीवनस्य विकासार्थं भौतिकवातावरणस्यानुकूलता साहित्येनाध्यात्मिकसांस्कृतिकवातावरणस्याप्यनुकूलता अपेक्षिता । आध्यात्मिकसांस्कृतिकवातावरणं सामाजिकोपलब्धिः । अत उपरि निर्दिष्टवर्णाश्रमव्यवस्थायाः पुष्टिर्जायते यद् मानवजीवनस्य विकासार्थं समाज आश्रयणीयः । उक्तं च केनापि— "सामाजिकजीवनस्याधीनतां स्वीकृत्यैव मनुष्यः पशुत्वद्योतकाहंकृतिं परित्यजति, तथा एवंविधामाध्यात्मिकचेतनां प्राप्नोति या मानवस्य स्वकीयविधाने उद्देश्ये च साधनीभूता जायते"[1] । कला, साहित्यम्, धर्मस्तथा ज्ञानं मनुष्यस्य सामाजिकी उपलब्धिः । एतेषां प्राप्तिरेव मनुष्यं सृष्टिवास्तविकतारहस्यं बोधयति । ततः सत्यं शिवं सुन्दरञ्च यत् श्रेष्ठमाध्यात्मिकमूल्यमस्ति तस्योपलब्धिर्भवति । आध्यात्मिकमूल्यानां प्राप्तिरेवात्मदर्शनम् । आत्मदर्शने सत्येवाशुभप्रवृत्तिहानपूर्वकं शुभप्रवृत्तयो विकसन्ति, तथा मानवो जीवनस्य चरमं लक्ष्यमुपैति, येन जगति नूतनं मार्गं प्रदर्शयति । इति ।

1. The Critical Philosophy of Kant, Vol ii, p. 610 ।

# आचार्यभामहीयोपमादोषविचारः

श्रीजगन्नारायणपाण्डेयः,

जूनियर रिसर्चफेलो

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

अलङ्कारशास्त्रे हि गुणादीनामिवालङ्काराणामपि विशिष्टं स्थानं वर्तत इति सर्वेषामपि काव्यतत्त्वविदां सम्मतं मतम् । अलङ्कारत्वं नाम रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमिति । अलङ्कारस्तावच्छब्दार्थतदुभयनिष्ठतया त्रिविधः । तत्रार्थालङ्कारेषु प्रायः सादृश्यमूलकचमत्कारस्य अनुस्यूतत्वेनालङ्कारिकैरुपमायाः सर्वालङ्कारनिर्वाहकत्वमुद्घोष्यते । यथोक्तमप्पय्यदीक्षितैः—

उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेत ॥ [१]इति ।

यो ह्यलङ्कारो नैकेषामलङ्काराणामुपकारकः सन् काव्यस्य चारुत्वोत्कर्षनिबन्धनायां प्राधान्यं भजते, स एव चेत् केनचिद् दोषेण दुष्टो भवेत् तदा कियत्कष्टमुत्पादयिष्यति सचेतसां चेतसीति विद्वत्तल्लजा एवात्र प्रमाणम् । अत एव काव्यात् तानुपमादोषान् निवारयितुमालङ्कारिकपितामहेन आचार्यभामहेन स्वकाव्यालङ्कारे सर्वतः प्रागुपमालङ्कारस्य सप्त[२] दोषा वस्तुतत्त्वमर्मस्पृशा दृशा समुपबृंहिताः । यद्यपि उपमादोषनिरूपणेऽयं स्वपूर्ववर्तिनोऽलङ्कारतत्त्वमर्मज्ञस्य मेधाविनोऽधमर्ण इति [३]तत्कथनेन ज्ञायते, परमेतावतापि उपमादोषाणां पृथक्-पृथग् विस्तरेण सोदाहरणं विवेचनं विधाय तत्स्वरूपपरिचयेऽतिशयेन साकर्यमुपस्थापयन्नाचार्यभामहोऽलङ्कारशास्त्रेऽलङ्कारदोषोद्घाटने सर्वप्रथम आचार्य इति नास्ति विचिकित्सावसरः ।

---

१. चित्रमीमांसा, उपमानिरूपणम्, पृ० ४२ ।

२ हीनतासम्भवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वञ्च तेनासदृशतापि च ॥
( का० अ० २।३९ )

३. त एवोपमादोषाः सप्त मेधाविनोदिताः ।
( का० अ० २।४० )

ते चोपमादोषाः—हीनत्वम्, असम्भवः लिङ्गभेदः, वचनभेदः, विपर्ययः उपमानाधिक्यम्, उपमानासादृश्यञ्चेति सप्त ।

तत्रोद्देशो लक्षणं परीक्षा चेति परीक्षावसरे यथामति तेषां लक्षणोदाहरणपरीक्षणं क्रमेण विधीयते ।

## १. हीनत्वम्

भामहेन वस्तुतो हीनत्वस्य न लक्षणं प्रतिपादितम्, तथापि तस्योदाहरणेनेत्थं वक्तुं पार्यते यत्–यत्रोपमानोपमेययोः सादृश्यप्रतिपादनावसरे उपमेयापेक्षयोपमाने काचिन्न्यूनता वर्ण्यते, तत्र हीनत्वं नाम दोषः ! यथा--

स मारुताकम्पितपीतवासा
विभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्रायुधो मेघ इवावभासे ॥[१] इति

यद्यपि अब्जशब्दः 'रूढिर्योगाद् बलीयसी' इति नीतिरीत्या कमलार्थ एव रूढः, परमत्र यौगिकमर्थमङ्गीकृत्य कविना जलाज्जायमानत्वादब्जपदेन शङ्खरूपोऽर्थो गृहीतः । वायुना मन्द-मन्दमान्दोलितपीताम्बरश्चन्द्रवच्छुभ्रशङ्खः शार्ङ्गधरो यदुवीरः श्रीकृष्णः सेन्द्रधनुर्मेघ इव रेज इति तात्पर्यम् ।

अस्मिन्नुदाहरणे उपमेयस्य श्रीकृष्णस्य पक्षे उपमानभूतेन मेघेन सह सादृश्यप्रतिपादकानि 'पीताम्बरः, शङ्खो धनुश्च' इति त्रीणि विशेषणानि कविनोपपादितानि । परं मेघपक्षे केवलमिन्द्रायुधस्यैव विशेषणत्वं विलोक्यते । यदि मेघपक्षेऽपि विशेषणत्रयं स्यात्, तदोभयोर्मध्ये साम्यादुपमालङ्कारः साधयितुं संशक्यः स्यात् । इन्द्रायुधविशेषणेन तु केवलं कृष्णस्य कार्मुकस्य साम्यं जातम्, परं शङ्खपीताम्बरयोस्तुलनायां मेघपक्षे नहि किमपि दृश्यते । त्रिषु विशेषणेषु केवलमेकस्यैव सादृश्यं प्राप्यते, नान्ययोर्द्वयोरिति न वक्तुं शक्यते । शङ्खपीताम्बरयोः साम्यं चेत् प्रतिभाशालिना कविना क्रमेण चन्द्रविद्युद्भ्यां वर्णितमभविष्यत्तदा नूनमुपमालङ्कारः समीचीनोऽभविष्यत्, किन्तु प्रमादादिना तेन नैवमकारि । अतोऽत्र हीनत्वदोषो नापलपितुं शक्यः केनचिदपीति सिद्धम् । इयमेव न्यूनता सामाजिकानां स्वान्तमतिशयेनोद्वेजयति ।

कस्यचिदपि हि वस्तुनोऽन्येन केनचित् पदार्थेन सह सर्वतोभावेन साम्यं न सम्भवि, अतो गुणलेशमात्रसाम्येनाप्युपमा भवतीति तथ्यं स्वयमेवोद्घाटितमाचार्यवरेण भामहेनोपमा-[२]

---

१. का अ० २।४९। २. का० अ० २।३०।

लक्षणपरीक्षणवेलायाम्। परमेतद्विपरीतमेव पूर्वोक्तहीनत्वदोषनिरूपणावसरे निगदता तेन वदतोः व्याघातो जात इति प्रतीयते। अस्या विचिकित्सायाः समाधानमुपस्थापयता[1] तेन स्वयमुक्तं यद् यद्यपि सत्यमिदं यत् सर्वांशतयोपमायां साम्यं न सम्भाव्यते, तथापि यथाशक्ति सर्वतोभावेनोपमेयोपमानयोः सादृश्यप्रतिपादनाय यतनीयमेव। दोषपरीक्षणस्य तावत् सहृदयहृदयमेव निकषः। यत्र हि सुमनसां मनसि कश्चिदुद्वेगो जायते, तत्रैव दोषप्रसङ्गः, अन्यथा तु नैव दोषावकाश इति सर्वसम्मतोऽयं राद्धान्त आलङ्कारिकाणाम्। अमुमेवाभिप्रायं सजलजलदगभीरया गिरा महाकविर्दण्डी[2] सुस्पष्टमाविष्कृतवान्। अत एव 'चन्द्र इव मुखम्' इत्यत्र केवलमाह्लादकसाम्यादेवोपमालङ्कारो महाकविभिरपि स्वीक्रियते। वस्तुतः सर्वतोभावेनोपमेयोपमानयोः साम्यस्थले उपमास्वीकारे तत्र प्रविरलविषयत्वमापतेत्, अतः साम्यलेशेऽपि चेच्चमत्कृतिस्तर्हि नूनमुपमा अङ्गीकरणीया। परमनेन कथनेन कविभिः साम्यप्रतिपादनेऽनवधानैर्न भाव्यम्, अन्यथा तादृशेन दुष्टकाव्यनिर्माणेन तु भामहोक्तदिशा[3] ते कवयो जीवन्तोऽपि मृता इव भविष्यन्ति।

## २. असम्भवः

भामहेनोपमादोषाणां लक्षणपरीक्षणमनुपपादयतैव केवलं तेषामुदाहरणानि प्रदत्तानि। असम्भवस्यापि विलोक्योदाहरणमित्थं प्रतीयते यद् यत्र काव्ये लोकेऽसम्भविनोपमानेन सममुपमेयस्य सादृश्यं निरूप्यते, तत्रासम्भवो नाम दोषो जायते[4]। लोके सम्भविन एव वस्तुन उपमानत्वेन वर्णनं सहृदयहृदयानुरञ्जकं भवति। यद्धि वस्तु नहि केनाप्यवलोकितं श्रुतं वा तस्य काव्ये निरूपणमरसिकतामेव जनयति। अतो हेतोरयं दोषोऽवश्यं परित्याज्यः। यथा[5]—

निष्पेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा
दिनार्द्धभाजः परिवेषिणोऽर्कात्॥ इति।

---

१. का० अ० २।४३।
२. यत्रोद्वेगो न धीमताम्। का० द० २।५१।
३. नाकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृत्युमाहुर्मनीषिणः॥
(का० द० १।१२)
४. का० अ० २।४८।　५. का० अ० २।४७।

पद्यमिदं वस्तुतः शाखावर्धनाभिधेयस्य कस्यचित् कवेः, परं भामहेन स्वकाव्यालङ्कारेऽसम्भवदोषस्योदाहरणत्वेनोपन्यस्तम्। केनचिन्नृपेण त्वरितगतिना बाणप्रक्षेपेण तद्धनुर्मध्यभागेन मण्डलायितम्। कार्मुकमध्यस्थं राजाननं सपरिवेषं भानुरिवावलोक्यते। पुनर्धनुषः परित्यज्यमाना इषवो राजमुखादेव सामीप्यातिशयेन निस्सरन्त इव प्रतिभान्ति। अत्र कविना बाणानां सादृश्यनिरूपणाय भानोर्निपतन्तीनामुष्णजलासाराणां वर्णनमकारि। परमत्र विचारणीयं यद् भानोरुष्णजलधाराणां निपातो नाद्यावधि केनापीक्षितः श्रुतो वा। अतोऽसम्भवदोषपङ्केन कलङ्कितमिदं पद्यं पद्यवैरस्याय सञ्जातम्।

अत्र किञ्चिद् विचार्यते निखिललोकनिर्माणक्षमस्य हि विधातू रचनामपि सरस्वतीस्वादुकाव्यनिर्माणदक्षस्य सुकवेर्निर्मितिरतिशेत इति [1]राजानकमम्मटभट्टैरप्युदीरितम्। इयं काव्यनिर्मितिः कवेर्नवनवोन्मेषशालिना प्रतिभाविलासेन लोकोत्तराह्लादात्मकनिरतिशयसुखसन्दोहचमत्कारशालिनी सुतरां नितरां समुल्लसति। एतादृशानुरञ्जकार्थप्रतिष्ठापकेषु काव्यस्थलेषु असम्भवो नाम दोषः स्वीक्रियेत चेत्, तदोत्प्रेक्षोपमातिशयोक्तिप्रभृत्यलङ्काराणां नामावशेष एव स्यात्। अपि च यद् भामहेन स्वयमेवाति[2]शयोक्तिप्रसङ्गे प्रतिपादितं तत्कथङ्कारं संगच्छेत? एष गजः पुञ्जीभूतं ध्वान्तमिव प्रतीयते शरन्निर्मलाम्भः सरश्च भूमौ निपतितं नभोखण्डमिव भातीति। अत्र भामहेन तमसः पुञ्जीभवनं नभोभागस्य च भूमौ पतनं स्वमनोरमानल्पकल्पनया निरूपितम्, परमेतयोर्द्वयोरपि लोकेऽसम्भवादत्राप्यसम्भवदोषः स्वीकार्यः।

परमार्थतस्त्वत्र सम्भावनायामेव चमत्कारातिशयत्वादुत्प्रेक्षालङ्कारेण भाव्यम्। आलङ्कारिकोद्भटेन मम्मटभट्टेन तु दोषोऽयमर्थानौचित्यरूपेण गृह्यते। कविकुलकमलनाथस्य पण्डितराजजगन्नाथस्य मते त्वेतादृशेषु स्थलेषु कल्पितोपमालङ्कारो विराजते। तेन 'त्वयि कोपो ममाभाति सुधांशाविव पावकः'[3] इत्यादावुपमानस्यात्यन्तमेवासम्भवादसादृश्यं प्रतिपादयतां विदुषां पक्षतक्षणपुरस्सरमिदमुद्घोषितं यत् सुधांशौ पावकस्य प्रसिद्ध्यसम्भवेऽपि तयोः पृथक्-पृथग् लोके प्रसिद्धत्वात् कविः स्वकमनीयकल्पनया चन्द्रे पावकं सम्भावयति चेत्, तर्हि चमत्कारायैव जायते तत्, नतु दोषायेति। भामहेन नात्र समीचीनं समाधानमुपस्थापितम्, येनेदं निर्णेतुं शक्येत यत् कुत्रातिशयार्थेऽलङ्कारो भवति, कुत्र चासम्भवो दोष इति।

---

१. का० प्र०, १ उल्लासः, मङ्गलाचरणम्।
२. भा० अ० २।५१।
३. रसगं० २ आननमुपमानिरूपणे द्रष्टव्यम्।

कविस्तावत् कस्यचिद्वस्तुनो यथार्थं स्वरूपमादर्शमयेन वर्णनेनावतंसयितुं कल्पनामाश्रयते। सा कल्पना चेद्वर्णनीयवस्तुनस्तात्पर्यार्थप्रकाशने काञ्चिदलौकिकीं चमत्कृतिमानयति, तर्हि तेन सहृदयहृदयानुरञ्जनेन कथङ्कारं तत्र दोषो भवितुमर्हति ? सम्भवतो भवेन्नाम कुत्रचिदेतद्विपरीतम्, येन धीमतामुद्वेगो जायेत, अतस्तत्र नूनमसम्भवदोषप्रसक्तिः स्वीकार्येति मे मतिः। अन्यथा नैव दोषलेशावकाश इति पद्यस्याशयः।

## ३-४. लिङ्गभेदो वचनभेदश्च

भामहेन लिङ्गभेदवचनभेदयोरपि लक्षणमनुक्त्वा केवलमेकस्मिन्नेव श्लोके पृथक्-पृथगुदाहरणमुपन्यस्तम्। तेन मन्ये नाम्नैवानयोर्लक्षणयोः स्फुरितत्वात् पृथग् लक्षणं न व्यधायि। यत्र काव्ये उपमेयोपमानयोः सादृश्यनिरूपणे लिङ्गभेदो भवेत्, तेन च सहृदयोद्वेगो जायेत, तत्र लिङ्गभेदो नाम दोष आपतति। एवमेव यत्रोपमानोपमेययोः परस्परं वचनभेदेन साम्यप्रतिपादनात् कश्चिदुद्वेगो भवेत्, तत्र वचनभेदोपमादोष उत्पद्यते। यथा—

अविगाह्योऽसि नारीणामनन्यमनसामपि।
विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षतः ॥ इति।

अत्र श्लोके पूर्वार्द्धं लिङ्गभेदस्योत्तरार्द्धञ्च वचनभेदस्योदाहरणतया भामहेनोट्टङ्कितम्, परमुत्तरार्द्धे लिङ्गभेदोऽपि लोचनपथमवतरति। कवी राजानं स्तौति। हे राजन्! त्वम् अनन्यहृदयाभिर्नारीभिस्तथैव अनवगाह्योऽसि, यथा केनचित् तितीर्षुणा जनेन विषमोपल-मिश्रिताभिर्लहरीभिः काचिन्नदी अनवगाह्या भवति। उपमालङ्कारस्य खलु सादृश्यमेव प्राणः। तच्चोपमानोपमेययोर्लिङ्गसाम्ये वचनसाम्ये चैव समीचीनतामञ्चति। प्रकृतपद्ये त्वं (राजा) इति पुल्लिङ्गस्योपमेयस्य आपगेति स्त्रीलिङ्गेनोपमानेन सह सादृश्यं प्रतिपादितं विद्यते। अनेनोभयोर्भिन्नलिङ्गेन साम्यावगमे धीमतां हृदि कश्चिदुद्वेगो दुर्निवारः। अतोऽत्र लिङ्गभेददोषः।

एवमेव नारीणामिति बहुवचनान्तस्योपमेयस्य उत्तितीर्षत इति शतृप्रत्ययान्तेन एक-वचनान्तेनोपमानेन साकं प्रतिपादितं सादृश्यं सचेतसां चेतस्युद्वेगजनकतया दोषायैव कल्प्यते। स चोद्वेगो वचनभेदेन सञ्जायते। अतो हेतोरत्र वचनभेददोष इत्याकलनीयम्। अत्रैव नारीणामिति स्त्रीलिङ्गेन उत्तितीर्षत इति पुंल्लिङ्गेन च मिथो लिङ्गभेदाद् लिङ्गभेदोऽपि स्फुट एव।

अत्र किञ्चिद् विचार्यते। यद्युपमेयोपमानयोः साम्यप्रतिपादनवेलायां लिङ्गभेदे सति लिङ्गभेदो नाम दोषः कल्प्यते, तर्हि बहुरूपमास्थलेषु दोषपङ्कोऽयमुदियात्। यथा

संस्कृतसाहित्ये न केवलं सामान्यकविभिः अपि तु महाकविकालिदासादिभिरपि पाणेः करस्य वोपमा कमलेन सह प्रतिपादिता तत्तद्ग्रन्थेष्वालोक्यते। परमुपमेयस्य करस्य पुंल्लिङ्गत्वात् कमलस्य चोपमानस्य नपुंसकलिङ्गत्वाद् लिङ्गभेददोषस्तत्र केन निवारयितुं शक्यः। किञ्चाधर-पदस्य पुंल्लिङ्गस्य साम्यमनुदिनं क्लीवेन बिम्बफलेन सार्धं निरूपयन्तो महाकवयोऽपि दोषं न लभन्ते। परमेतादृशेषु स्थलेषु नहि विद्वद्भिर्दोष उद्घोष्यते। ननु तर्ह्यत्र दोषा-दोषनिर्णये किं विनिगमकमिति चेत्, पूर्वं भामहमतानुसारं समाधानं श्रूयताम्। यद्यप्युपमा-स्थलेषु प्रायो लिङ्गभेदोऽवलोक्यते, किन्तूपमानोपमेययोः स्त्रीलिङ्गपुंल्लिङ्गभेदेनैव दोषोऽय-मवतरति, स्त्रीलिङ्गक्लीवयोः पुंल्लिङ्गनपुंसकयोश्च भेदस्त्वभिमत एव। केचित्तु त्रयाणामपि लिङ्गानां मिथो भेदे दोषं मन्वते। तेषामयमाशयः—पुंल्लिङ्गस्य पुंल्लिङ्गेन, स्त्रीलिङ्गस्य स्त्रीलिङ्गेन, क्लीबस्य च क्लीवेनैव सह साम्यं प्रतिपादनीयम। अन्यथाकरणे तु दोषोऽनु-धावत्येव। अनया दिशा करकमलादिप्रयोगा दुष्टा एव सिद्ध्यन्ति, परं कविपरम्परागृहीतत्वात्ते न तथोद्वेजका इति मन्तव्यम्। वस्तुतो यथाशक्ति लिङ्गवचनभेदो नैव सुकविभिः करणीय इति बोध्यम्। काव्यस्य दोषादोषनिर्णये हि सहृदयाः प्रमाणमिति प्रागेव मया प्रतिपादितम्। यत्काव्यं पठनाच्छ्रवणाद्वा झटिति पाठकान् अमन्दानन्देन तुन्दिलयति तदेव सत्काव्यम्; यत्र तु भूयो भूयः प्रज्ञामन्दराचलेन विलोड्यमानोऽपि रसिकः किमपि वस्तुतत्त्वं केनचित् प्रतिबन्ध-केन नावाप्नोति, तत्रैव दोषकल्पना करणीयेति च मया पूर्वमपि निगदितम्। प्रकृतावपि तथैवोरीकरणीयम्। एवमेव दण्डिनाऽपि काव्यादर्शे निरगादि।[1]

अनेन सिद्धं यत् शिष्टेष्टप्रयोग उपमास्थले लिङ्गवचनभिन्नतायामपि न दोषावह इति।[2] वामनस्तु[3] सुस्पष्टमुक्तवान् यद् भिन्नयोरपि पुंनपुंसकलिङ्गयोरुपमानोपमेययोः साम्यप्रतिपादने प्रायेण न तावद्दोषो यावत् सुकविपरम्परा न भिद्येत। यथा 'चन्द्र इव मुखम्' इत्यादौ, परम् 'इन्दुमुखम्' इति कथने तु लिङ्गभेददोषः स्वीकार्य एव, कविभिरप्रयोगात्।

## ५. विपर्ययः

वस्तुतः सादृश्यप्रतिपादनायोग्ययोरप्युपमानोपमेययोः सादृश्यनिरूपणे विपर्ययो नामो-पमादोषो जायते। असादृश्यञ्च क्वचिदुपमानस्य हीनत्वे सति जायते क्वचित्तु तदाधिक्ये।

---

१. न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।
उपमा दूषणायालं यत्रोद्वेगो न धीमताम्॥
(का० द० २।५१)

२. "शिष्टेष्टस्तु न दुष्यति"—(का० द० ३।१४८)।

३. "इष्टः पुन्नपुंसकयोः प्रायेण"—(का० अ०, सू० ४।२।१२)।

यद्यप्युपमेयापेक्षयोपमानस्य गुरुता निसर्गसिद्धेति न तत्र संशयावकाशः, परमुपमानातिशयित्व-निरूपणेऽपि काचित् सीमा निर्धार्यत एव तज्ज्ञैः। तस्या एवोल्लङ्घने दोषावतारः। अनयैव दृष्ट्या भामहेन द्विविधो विपर्ययो वर्णितः—हीनविपर्ययः, अधिकविपर्ययश्चेति। तत्र हीन-विपर्ययो यथा—

क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम्॥[1] इति।

हे नृप! क्वचिदग्रतस्तथा क्वचित् पृष्ठतः प्रहरता त्वया रिपुसेना शुना सारङ्गकुलमिव भिन्नेत्यर्थः।

अत्र हि राज्ञः साम्यं तत्तद्दृशप्रतापशालिना वस्तुना प्रतिपाद्यमासीत्, परं प्रतिभाविही-नेन कविना तस्योपमा शुना सह प्रतिपाद्य महाननर्थः कृतः। उपमेयापेक्षयोपमानस्यातिशयेन न्यूनत्वादत्र हीनविपर्ययः। उपमानस्यायोग्यत्वमेवात्र रसिकोद्वेगजनकत्वाद् दूषकताबीजम्।

अधिकविपर्ययो यथा—

अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः॥[2] इति।

पद्मासनस्थोऽयं चक्रवाको युगादौ प्रजानिर्मित्सुर्विधातेव शोभत इत्यर्थः।

अत्र देवानांप्रियेण कविना अतीव क्षुद्रस्य चक्रवाकस्य समता निखिलसृष्टिनिर्माणक्षमेण ब्रह्मणा सह प्रतिपादिता। कुत्र हि वराकश्चक्रवाकः, कुत्र च सर्वशक्तिमान् विधाता? अतोऽत्रा-धिकविपर्ययदोषो विजृम्भते। पूर्ववदत्राप्युपमानायोग्यत्वमेव दूषकताबीजम्।

इमावुभावपि दोषौ दण्डिना सादरमुरीकृतौ। राजानकमम्मटस्त्वनयोरन्तर्भावमनु-चितार्थत्वदोषकुक्षौ विदधाति[3]।

## ६. उपमानाधिकत्वम्

यत्रोपमानोपमेययोः साम्यप्रतिपादनवेलायामुपमानस्योपमेयापेक्षयातिशयेनाधिक्यं वर्ण्यते, तत्रोपमानाधिकत्वदोषप्रसक्तिः। अस्योदाहरणतया भामहेन प्राचीनविदुषा रामशर्मणा निर्मितमेव पद्यमुद्धृतम्। तच्चेदम्—

---

१. का० अ० २।५४।
२. का० अ० २।५५।
३. "उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वमधिकता वा तादृशी अनुचितार्थत्वं दोषः, धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरतः"—(का० प्र० १० उल्लासः, पृ० ७७४)।

स पीतवासा प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां
संसृज्यमानः शशिनेव मेघः ॥[1] इति ।

पीताम्बरो धृतकार्मुकः कृष्णो निशायां शशिना विभूषितश्चपलेन्द्रायुधविशिष्टो मेघ इव मनोज्ञभीमेन देहेन शुशुभ इति तात्पर्यम् ।

अत्रोपमेयस्य श्रीकृष्णस्योपमानेन मेघेन सह कविना साम्यं प्रतिपाद्यते । कृष्णपक्षे शार्ङ्गपीताम्बरयोर्द्वयोरेव विशेषणत्वम्, परं मेघपक्षे विद्युदिन्द्रधनुश्चन्द्रमसां त्रयाणां विशेषणानामुपन्यासो विलोक्यते । विद्युता पीताम्बरस्य इन्द्रायुधेन च शार्ङ्गस्य तुलनोचिता, किन्तु शशिना सह साम्यसिद्धये कृष्णपक्षे न किमपि वस्तु पद्ये दृश्यते । अत एवात्रोपमानाधिकत्वदोषः । यदि श्रीकृष्णोऽपि शङ्खेन विभूषितो वर्ण्येत, तदा नैव दोषावकाशो जायेत । अस्मादेव राजानकमम्मटोऽप्यत्रोपमानस्याधिकपदत्वदोषमङ्गीकरोति ।[2]

वस्तुतस्त्वत्र उपमानाधिकत्वादप्यतिशयेनोद्वेगजनको दोषोऽसम्भव इति जृम्भते, यतो नहि लोके केनापि रात्रावद्यावधि लोचनगोचरीकृतमिन्द्रधनुः ।

यदि केनाप्युच्येत यदुपमेयपक्षेऽनिर्दिष्टस्य शङ्खपदस्याक्षेपे कृते सति दोषस्य निवारणं स्यादिति, तदपि नातिसमीचीनं प्रतिभाति । वाच्यालङ्कारस्तावदुपमा, अतस्तत्र गम्यत्वप्रतिपादनं नातिवरम् । उपमायां हि सर्वात्मना सादृश्यमसम्भवीति प्रागपि प्रतिपादितं मया । अत उपमेयपक्षे शङ्खपदप्रयोगाभावेऽपि दोषेण न भाव्यम् । अथवा शङ्खसाम्यप्रतिपादनमेव कविविवक्षितं न स्यादित्यपि दोषनिवारणे समीचीनं समाधानं वक्तुं शक्यते ।

उपमानस्याधिक्यं हि प्रकारद्वयेन भवितुमर्हति, सादृश्यप्रतिपादकविशेषणतयोपमानस्यानेकत्वे च । तत्र प्रथमः प्रकारस्तु विवेचितोऽस्माभिः । द्वितीये प्रकारेऽपि सकृदुक्तस्यार्थस्य प्रतिपादनेऽनेकेषां शब्दानामुपबृंहणं न किञ्चिच्चमत्कृतिं जनयति, अपि तु पौनरुक्त्यमेव पुष्णाति । यथा—

गोक्षीरकुन्दहलिनां विशुद्धया सदृशं यशः ।[3] इति ।

---

१. का० अ० २।५८ ।

२. "अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते, इत्याधिकपदत्वम्"—( का० प्र० १० उल्लासः, पृ० ७७४ ) ।

३. का० अ० २।६१ ।

अत्र यशस उज्ज्वलतामुपपादयितुं कविना गोदुग्धकुन्दपुष्पबलरामाणामुपमानत्वेन वर्णनमकारि। तच्च नैर्मल्यं केवलमेतेष्वन्यतमेनापि निरूपयितुं शक्यमासीत्, परमनेकोपमानत्वनिरूपणात् पौनरुक्त्यं मम्मटादीनाञ्च मते अपुष्टार्थत्वं भजते। अतो नैतादृशः प्रयोगः प्रशंसार्हः।

## ७. उपमानासादृश्यम्

भामहेनोपमाया अन्तिमो दोषोऽसादृश्यमिति निरूपितम्। पूर्ववदेवास्यापि लक्षणं तेन न व्यधायि। नामतो व्युत्पत्तिनिमित्तोऽर्थस्तु सदृशस्य भावः सादृश्यम्, न सादृश्यमित्यसादृश्यं सिद्ध्यति। यत्र खलु उपमानोपमेययोः सादृश्यस्याधार एव तयोर्मिथोऽसादृश्यं प्रतिपादयेत्, तत्र सादृश्याभावात् सहृदयहृदयोद्वेगादसादृश्यदोषो जायते।

कस्यचिद्वस्तुनः केनचिदपि वस्तुना सह प्रसह्य असादृश्येऽपि सादृश्यप्रतिपादनमात्रेण नोपमालङ्कारो जायते। अतस्तयोर्येन केनापि संबन्धेनावश्यमेव भवितव्यम्। तस्मिश्च सादृश्ये यदा काचिच्चमत्कृतिरुदेति तदैवोपमाऽलङ्कारपदवीं भजते, नान्यथेति विदुषामुद्घोषः। यत्र तावत् सादृश्य एव सन्देहस्तत्रोपमालङ्कारस्य कुतो ह्यवसरः, तत्र तु दोष एव स्यात्। यथा—

वनेऽथ तस्मिन् वनितानुयायिनः
प्रवृत्तदानार्द्रकटा मतङ्गजाः।
विचित्रबर्हाभरणाश्च बर्हिणो
बभुर्दिवीवामलविग्रहा ग्रहाः॥[1] इति।

तस्मिन्नरण्ये स्वकान्तानुयायिनो दानार्द्रकटाश्च गजाः विचित्रवर्णधारिणो मयूराश्च निर्मलग्रहाणामिव शुशुभिरे इति भावः।

अत्र कविना गजानां तथा मयूराणां ग्रहैस्साकं साम्यं प्रतिपादितम्, परं तेषु मिथो ह्यतोऽपि साम्यं न लोचनपथमवतरति। नहि गजाकारसदृशाः श्रुता दृष्टा वा केनचिदपि हाः। एवमेव मयूराणामपि ग्रहैस्सह नहि केनापि विधिना सादृश्यमुपपद्यते। अतो न्दमतिना कविनोपमेयोपमानयोरसादृश्ये सादृश्यमुपपादयता महाननर्थो व्यधायि। एतादृशपमास्थलमवलोक्य समधीत्य च कः सहृदयो भवन् भ्रूसङ्कोचं न करिष्यति? अस्मादसादृश्यवः सर्वजनानुरागाभिलाषुकैः सुकविभिर्नूनं परित्याज्य एवेति निर्गलितोऽर्थः।



१. का० अ० २।६३।

# परमाणुद्वयसंयोगः

श्रीहेव्वारशास्त्री
साङ्गवेदविद्यालयः, वाराणसी ।

[ विशेषः—अत्र निबन्धे सर्वत्र विज्ञप्तिमात्रतासिद्धिमिच्छतापि क्वाप्यवयवत्वमनभ्युपगच्छता "वृक्षे शाखायां कपिसंयोगः" इति व्यवहारेऽप्यवयवत्वेन शाखायामवच्छेदकत्वं नोपपादयितुं शक्यते । व्यवहारोपपादकैर्नैयायिकवैशेषिकैरत्वनवयवयोरपि शरीरभेर्याद्योर्ज्ञानशब्दाद्यवच्छेदकत्वमिष्यत इत्याशयो दर्शितः ।

एवमेवैकस्मिन् परमाणौ षण्णां परमाणुसंयोगानां युगपत् सामग्र्यां सत्यां परस्परं स्पर्शवद्द्रव्यत्वेन प्रतिबन्धादेव परस्परावच्छेदेन परस्परसंयोगानवस्थितेरुपपत्तिरिति स्पर्शवद् द्रव्याणामायतनाक्रमणनियमाद् वैज्ञानिकमुक्तम् ।]

न्यायवैशेषिकनये परमाणुर्नित्यो निरवयवश्चेष्यते । तयोः संयोगेन परमाणुभ्यां द्व्यणुकः, द्व्यणुकैश्च त्र्यणुक इत्यादिक्रमेणारम्भवादः ।

तत्र प्रष्टारो भवन्ति निरवयवस्य परमाणोः परमाण्वन्तरेण संयोगः किं सप्तमीनिर्देश्यकिञ्चिदवच्छेदकेनावच्छिन्न एव वा, उत निरवच्छिन्नः ? यद्यवच्छिन्नः, निरवयवे तत्र किमवच्छेदकम् ? यदि निरवच्छिन्नस्तर्हि कथमव्याप्यवृत्तित्वमिति प्रश्नतात्पर्यपर्यवसानम् ।

यद्यप्ययं प्रश्नो विभूनां सर्वमूर्तद्रव्यसंयोगित्वेऽपि विषये सम्भवति, तथापि तत्रावयविमूर्तद्रव्य-विभुसंयोगेऽवयवस्यैवावच्छेदकत्वमुभयत्रापि क्रमेण समवेतत्व-संयोगाभ्याम् । एवं तत्तदवयवानां च तत्र तत्र संयोगेऽवच्छेदकत्वमिति वक्तुं शक्यत्वाद् न प्रश्नः । निरवयवमूर्तद्रव्यविभुसंयोगे विषये तु प्रश्नः शिष्यत एव, तथापि तस्यापि संयोगस्य द्रव्यारम्भकत्वानङ्गीकारात्, नित्यसंयोगाङ्गीकर्तृमते विभुद्वयसंयोगस्य निरवच्छिन्नवृत्तिकत्वाङ्गीकार इव निरवच्छिन्नवृत्तिकत्वाङ्गीकारे बाधकाभाव इति सम्भवति निरवयवमूर्तद्रव्ये विभुसंयोगस्य निरवच्छिन्नवृत्तित्वम्, विभौ तु तत्संयोगं प्रति तदेव निरवयवमूर्तद्रव्यं सहैव कथञ्चिदवच्छेदकमित्यादेर्वक्तुं शक्यत्वात्, परमाणुद्वयसंयोगे क्रियमाणसमाधानेन सर्वत्रैव समाधातुं शक्यत्वादिति वा मत्वा तत्रैव प्रष्टारो भवन्ति । परमाणुद्वयसंयोगे तु नान्यतर-

स्याप्यवयवं ऽवच्छेदको विद्यते । द्रव्यारम्भकश्चायं संयोग इष्यत इति न व्याप्यवृत्तिरित्यभ्युपगन्तुं वा शक्यत इति ।

यद्यप्यवयवस्यैवावच्छेदकत्वमिति न नियमः, आकाशे शब्दाद्युत्पत्तौ भेर्यादीनाम्, आत्मनि ज्ञानादीनामुत्पत्तौ शरीरादीनामवच्छेदकत्वाभ्युपगमात्, तथापि किमप्यवच्छेदकं वक्तव्यमिति ।

यच्च 'दिक्सम्बन्धोऽवच्छेदकः' इत्युच्यते, तत्र विचारणीयम्—का सा दिग् यावच्छिनत्ति? अनवच्छिन्ना तु नावच्छेत्तुं शक्नोति । किञ्चिदुपाध्यवच्छिन्ना चेत्, तस्या इदानीं सम्भवेऽपि सर्वकार्यद्रव्यध्वंसरूपप्रलयानन्तरं सृष्ट्यारम्भे मेरुसूर्याद्यभावेन प्राच्यादिपरिभाषितावच्छिन्नदिशामसम्भवे कथमवच्छिन्नदिक्सम्बन्धः कथनीयः? यदि तदानीं प्राच्याद्यपरिभाषितैव काचित् प्रतिरोधकाभावाद्यवच्छिन्ना दिगभ्युपगम्यते, यस्याः सम्बन्धः परमाणौ क्रियया उत्तरदेशसंयोगादौ जननीये अवच्छेदकः स्यात्, तथापि तत्राप्यवृत्तित्वनियामकमवच्छेदकं वक्तव्यम् । यदि क्वचिद् विनैवावच्छेदकमव्याप्यवृत्तित्वाभ्युपगमः, तदा क्वापि तथावच्छेदकाभ्युपगमो निर्युक्तिकः स्यादिति चेत्, उच्यते—

परमाणोः परमाण्वन्तरेणाव्याप्यवृत्तिसंयोगे प्रागभावः, तर्हि दिक्सम्बन्धस्याप्यवच्छेदकोऽवच्छेदकोऽस्तु । न चोत्पत्तौ सोऽवच्छेदकः स्यात्, न तु स्थितौ । "वृक्षे मूले कपिसंयोगो नास्ति" इति कपिसंयोगाभावस्य अव्याप्यवृत्तित्वाय स्थितिं प्रत्यपि मूलस्य तत्रावच्छेदकत्वाभ्युपगन्तृभिरत्रापि वक्तव्यत्वात् । यद्यपि यथा घटस्यैकस्यैव भिन्नभिन्नावच्छेदेन स्थितिर्दृश्यते, 'सम्प्रति गृहे कोणे घटः, ततस्तरुण्याः कक्ष्याम्, ततः कूपकुट्टिमे शिलायाम्' इत्यादि, तथेह स्थितौ प्रागभावध्वंसादिकं किमप्यन्यदन्यदवच्छेदकमिष्येत, परन्तु कार्यतावच्छेदकसमवायसम्बन्धेन स्थितौ दैशिकावच्छेदकभेदो न दृष्ट इति चेत्, मास्तु, तर्हि स्वस्यैव प्रागभावः, किन्तु परमाणुसंयोगस्य कस्यचित् प्रागभावः स्थितावप्यवच्छेदकोऽस्तु, मुहुः परमाणुसंयोगस्येष्यमाणत्वात् । यदि कदाचित् सर्वेषां मुक्तौ ततो न सृष्टिः, तदा अन्तिमपरमाणुसंयोगस्य स्थितौ अवच्छेदकः परमाणुसंयोगप्रागभावो दुर्लभ इति चेत्, तर्हि उत्पत्तौ स्थितौ च परमाणूनामुत्तरोत्तरसंयोगं प्रति पूर्वपूर्वसंयोगध्वंस एवावच्छेदकोऽस्तु, संसारस्यानादित्वेन कदाचिदपि तस्य दौर्लभ्याभावादिति ।

## वेदान्तिकृताक्षेपपरामर्शः

अथ वेदान्ती चेदत्राक्षिपति—अनवस्थादोष इति । नायं दोषः, प्रामाणिकत्वाद्, वेदान्तिनामविश्रान्तवासनापरम्पराभ्युपगमवत् । पूर्वपूर्वसंयोगध्वंसव्यक्तिभेदस्येष्टत्वात् । पर-

म्पराविश्रान्तिर्नेति चेन्मास्तु, परमाणुसंयोग-द्व्यणुकादिकार्योत्पत्तेः स्थितेश्च तद्विश्रान्तिं विनापि सम्भवात्। अस्मदादीनामसर्वज्ञानामव्याप्यवृत्तिसंयोगादिज्ञप्तावपि नानुपपत्तिः, त्रिचतुरकक्षानुधावनक्षमासत्वाद् व्यवहारस्य। ततः परमविचारितरमणीयत्वात्। व्यवहारातीतं किञ्चित् परमार्थतत्त्वं नैयायिकवैशेषिका नाभ्युपगच्छन्ति, येन मिथ्यात्वमेतावता सृष्टेस्तैर्वक्तव्यं स्यात्। वेदान्तिकृतानां सर्वेषामाक्षेपाणां पर्यन्ते मिथ्यात्वे पर्यवसानमित्युक्तं वेदान्तसूत्रमुक्तावल्यां श्रीगौडब्रह्मानन्दसरस्वतीभिः। यथा—

"नित्यमेव च भावात्" (ब्र० सू०, अ० पा० २, सू० १४) इति सूत्रव्याख्याया अन्ते—"किञ्च परमाणुनिष्ठे संयोगे दिक्सम्बन्धस्यावच्छेदकत्वे तत्राप्यवच्छेदकमवश्यं वाच्यम्, अन्यथा तस्य परमाणौ व्याप्यवृत्तित्वेनावच्छेदकत्वानुपपत्तेः। तथा चानवस्था मूलादेरवच्छेदकत्वेऽपि तदापत्तिर्नास्माकं प्रतिकूला, संयोगमात्रस्य मिथ्यात्वसाधकत्वादिति भावः" इति।

एवमुक्तं साधीयस्तरमुत्तरम्। जरन्नैयायिकानां क्षुण्णमार्गादस्कन्नं सर्वथा।

## अथ चिन्तोपलक्षितमुपक्षिप्यतेऽनवस्थापरिहाराय

अथवा एवमनवस्थापि परिहर्तव्या। नित्यमेवाव्याप्यवृत्तिसिसृक्षाविषयत्वं दिक्सम्बन्धस्याप्यवच्छेदकं तत्र परमाणाविष्यते। 'बहु स्यां प्रजायेय" इत्यत्र "परमाणू संयुनजानि, ततो द्व्यणुकादिक्रमेण प्रजनयानि" इत्याकारः। यावद्दिक्सङ्ख्यं प्रतिपरमाणुविषयताः परमाणुस्वरूप एव नित्यस्थितिकाः, परस्परावच्छेदेन परस्पराभावप्रतियोगिन्यः। तत्तत्संयोगं प्रति तत्तद्दिक्सम्बन्धावच्छेदकविषयत्वमवच्छेदकमिति। प्रलयादिकाले सामग्र्यभावाद् न सदा संयोगारम्भः। सामग्रीकाले त्वन्यदापि इष्यत एव पीलुपाकप्रक्रियाणामिव। सर्वमिदं फलबलात्कल्प्यते। न च विषयत्वस्य व्याप्यवृत्तित्वमेव स्वभावः, "उपरि वृक्षो दृश्यते, न त्वधो भूमेर्मूले" इत्यादिप्रत्ययात्। शरीरावच्छेदेनैवात्मनः "अहं सुखी" इत्यादिप्रत्यक्षीक्रियमाणत्वाच्चाव्याप्यवृत्तित्वस्यापि क्वचिदनुभवात्। शरीरानवच्छेदेनापि आत्मा यदि प्रत्यक्षीक्रियेत, तदा तु मुक्तिरेव। वेदान्तिभिश्च ब्रह्मचैतन्याभिन्नस्यापि विषयचैतन्यस्यैव प्रमाणप्रमेयत्वमिति विषयत्वस्य ब्रह्मण्यव्याप्यवृत्तित्वमङ्गीक्रियते। अत एव नैयायिकानां विषयस्य घटादेर्विषयतावच्छेदकत्वमेवेति ते वदन्ति। असति बाधकेऽत्रांशे वेदान्तेनैकवाक्यत्वस्य न्यायेऽपि वक्तुं न्याय्यत्वात्।

नन्वत्रास्ति बाधकम्—प्रत्यक्षे एकदेशग्रहणादुपलब्धेरनुमानत्वमाशङ्क्य "न प्रत्यक्षेण यावत्तावदुपलम्भात्" इति प्रत्यक्षपरीक्षासूत्रे स्थापितमिति चेत्, न हि तत्र विषयत्वस्य

सर्वत्र व्याप्यवृत्तित्वमेवेति सिद्धान्तितम्; किन्त्वेकदेशे गृह्यमाणत्वेऽभिमते सहैवैकदेशेन सम्बद्धावयव्यपि गृह्यत एवेत्येव सिद्धान्तितम्। स चावयवी गृह्यमाणः किं सर्वावच्छेदेन गृह्यते, उत एकदेशावच्छेदेनेति तु यथोपपत्ति निर्णेतव्यं विचक्षणैरिति। तस्मान्नास्ति बाधकम्।

अथवा अन्यत्र भवतु यथाकथमपि। आत्मनीव निरवयवे परमाणौ स्वतन्त्राया ईश्वरेच्छाया उक्तविधा व्याप्यवृत्तिविषयता यदि कल्प्यन्ते, तर्ह्यनवस्थापि परिह्रियत इत्येव वदामः। न चैवमपि तत्राप्यवच्छेदकं वक्तव्यमित्यनवस्थैव; नित्यस्य तस्यावच्छेदकान्तरमनपेक्ष्य स्वावच्छेदेनैव परमाणुस्वरूप एव स्वतोऽव्याप्यस्थितेः, अत एवाभ्युपगमात्। अनवस्थापरिहारार्थं विशेषस्य स्वतो व्यावृत्तत्वाभ्युपगमवत्।

न चैवेत्थमस्माभिरेव निरवयवपरमाणोः सर्वं स्वरूपे तथेत्यभ्युपगन्तव्यम्। निरवयवे ब्रह्मणि वेदान्तिभिरेव तत्तदुपाध्यवच्छेदेनान्योपाधीनामभावः, पर्यन्ते च सर्वोपाधीनां ब्रह्मस्वरूप एव कल्पनमिति स्वीकारात्। यथोक्तम्---

विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्।
आद्ये व्याहतिरन्यत्रानवस्थात्माश्रयादयः॥
इदं गुणक्रियाजातिद्रव्यसम्बन्धवस्तुषु।
समं तेन स्वरूपस्य सर्वमेतदितीष्यताम्॥ इति।

( पञ्चदशी० प्र० १५०-५१ )

न चैवं तर्हि वेदान्त्यभ्युपगतः—

विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि।
विकल्पितत्व-लक्ष्यत्व-सम्बन्धाद्यास्तु कल्पिताः॥

इति तत्रैवोक्तो न्यायो न्यायेऽप्यायातीति चेत्; न तदभ्युपगम्यते नैयायिकैरिति।

अस्या अनादेरीश्वरेच्छाविषयत्वरूपशक्तेः परमाणावेकदेशवृत्तित्वं स्वतः स्वेनैवावच्छेदेन, वेदान्तिनां ब्रह्मणि शक्तेरिव न प्रश्नमनुधावति। यथा तैरेवोच्यते—

न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किन्त्वेकदेशभाक्। इति।

अत्र च—

पादोऽस्य सर्वा भूतानि त्रिपादस्ति स्वयम्प्रभः।
इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः॥

इति वेदान्तिभिर्वक्तव्यम्। परमाणावेकदेशवृत्तित्वमुक्तविषयत्वस्य तु तार्किकैः फलबलमात्रकल्प्यमित्येव विशेषः। अतो न्यायेऽपि नानवस्थेति।

अवच्छेदकमपेक्षणीयमेव

अथान्यथा चेदपीदं प्रतिपत्तव्यम्—परमाणुः परमाण्वन्तरेण ( बहिरन्तर्व्याप्य ) व्यक्तौ रूपादीनामिव, परमाणौ विभुसंयोगस्येव वा निरवच्छिन्नवृत्तिसंयोगवान् न सम्भवति, स्पर्शवद्द्रव्यत्वे। परमाण्वोर्युगपत् परस्परावच्छेदेन परस्परावस्थाने परस्परं प्रतिबन्धात्। तत एव च जलपूर्णघटे अन्तरेव व्याप्तजलसंयोगवत् परमाणुसंयोगवानपि न भवितुमर्हति। तथैव नापि जलमग्नशिलायां बहिरेव व्याप्तजलसंयोगवत् परमाणुसंयोगवान् सम्भवति, परमाणौ तत्कारणह्रस्वत्वदीर्घत्वादितावत्परिमाणकत्वाभावात्। तथा चान्यविधावच्छिन्नवृत्तित्वं परमाण्वोः संयोगस्यास्तु मा वा ? उक्तत्रिविधवृत्तित्वं तत्र नैव सम्भवति; उक्तात् प्रतिबन्धकात् कारणाभावाच्चेत्युक्तौ किमनुपपन्नम् ? अत एवैतादृशत्रिविधविलक्षणः क्रियया जायमानः परमाणुद्वयसंयोगः प्रोक्तप्रतिबन्धादेव न व्याप्यवृत्तिः, किन्तु स्वसमानाधिकरणात्यन्ताभावप्रतियोग्येव भवति।

नन्वेवं सति परमाणूनां सर्वेषां समपरिमाणत्वात् चतसृषु दिक्षु ऊर्ध्वमधश्चेति षट् परमाणुसंयोगा एकस्मिन् परमाणौ युगपत् सत्यां सामग्र्यां सम्भवति। तेषां मध्ये परस्परप्रागभावावच्छेदेन परस्परानुत्पत्तिः स्वस्वप्रागभावैरेव नियम्यते। यथाकार्योत्पत्ति च प्रागभावानां स्थितिः कल्पनीया। परस्परावच्छेदेन संयोगानामवस्थितिस्तु परस्तात् परस्परं स्पर्शवद्द्रव्यत्वेन प्रतिबन्धादेव वार्यताम्। एवं सजातीयानां नो चेद्विजातीयानामेव वा परमाणूनां महाप्रलयान्यकाले सदा परितः संयोगसामग्रीसम्भवेन प्रोक्तप्रतिबन्धेनैव परस्परावच्छेदेन परस्परस्थितिवारणसंभवात्, किं तत्रावच्छेदककारणत्वकल्पनयेति चेत्, यदि कदाचित् क्वचिद् युगपत् षण्णां सामग्री दैवान्नास्ति, तदा महाप्रलयान्यकाले एकदिगभिमुखक्रियया अन्यदिशि परमाणुसंयोगस्य उत्पत्तेः स्थितेरेव वा वारणाय; किञ्च प्रागभावानां चानादिस्थितेरव्याप्यवृत्तित्वनियमनायावच्छेदकमपेक्षणीयमेव। पूर्वोक्तध्वंसादेरवच्छेदकत्वे त्वनवस्था या सापि परिहरणीयेति चेत्, तर्हि प्रोक्तेश्वरेच्छैव शरणम्। उक्तमेव विषयतया सा स्वतोऽव्याप्यवृत्तिरवच्छेदिकेति। तथा च यद्यदर्थमेव कल्पनीयम्, तत्तथा कल्पनीयम्, यथा सर्वं समाधीयेतेति न्यायात् समाधानं व्यवस्थाप्य इति। इदमुक्तमन्यथा चेदपि प्रतिपत्तव्यम्।

परमाणोर्बिन्दुस्वरूपविमर्शः

अथ यद्याधुनिका गणितविज्ञानिनः परमाणुसंयोगमाक्षिपन्तीति कश्चिद् भ्राम्यति स समाधीयते—

क्षेत्रमितौ पं० श्रीदुर्गाप्रसादद्विवेदिमहोदयो बिन्दुलक्षणम्—"यो नियतस्थानोऽपरिमाणो विभागानर्हः स बिन्दुः" इत्याह। सम्राट् श्रीजगन्नाथमहाभागश्च रेखागणिते "यः पदार्थो दर्शनयोग्यो विभागानर्हः स बिन्दुशब्दवाच्यः" इति। पाश्चात्त्यानामपि ज्यामितिग्रन्थेष्वेवंविधान्येव बिन्दुलक्षणानि दृश्यन्ते।

अत्र विभागानर्हत्वं निरवयवत्वम्, तच्च परमाणोः सर्वावस्थायामपि प्रसिध्यति। "चरमः सद्विशेषाणामनेकोऽसंयुतः सदा। परमाणुः स विज्ञेयः" इत्यत्र श्रीभागवते "सतः कार्यस्य विशेषाणामंशानां यश्चरमोऽन्त्यः, यस्यांशो नास्ति सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति, स परमाणुर्विज्ञेयः" इति श्रीधरी। अर्थात् कार्यसमुदायावस्थयोरप्यस्ति सः, येन बिन्दुना सता ते अवस्थे अविवक्षित्वा शिल्पिनां गणितिनां च दृश्यचिह्नोपलक्षितेन व्यवहारः प्रसाध्यते। साम्प्रतमणुविखण्डने योऽणुरुच्यते स सूक्ष्मः कणोऽणुरेव, नास्माकं परमाणुरभिप्रेतः। जालसूर्यमरीचिस्थेषु यतः परं सूक्ष्मं कदापि केनापि कथमप्युपकरणेन लौकिकसन्निकर्षेण न दृश्यते, तस्य षष्ठांऽशो न्याये वैशेषिके च परमाणुः। बिन्दुस्तु स एव यस्यांशो नास्ति इत्यादि लक्षितः। अंशवत्त्वे विभागार्हत्वं स्यात्। तथा सत्येकस्माद्बिन्दोर्भिन्नभिन्नांशादसंसृष्टरेखाद्वयोपगमः सम्भवेत्। एवं च सति गणितसिद्धान्तः सर्वोऽपि व्याकुलीस्यात्, ततश्च यदि बिन्दुर्नालीकः, तर्ह्यविवक्षिताणुत्वादिपरिमाणं परमाणुस्वरूपमात्रं स इति वक्तव्यः, गत्यन्तराभावात्! अविवक्षयैवापरिमाणवत्त्वम्, न वस्तुतः।

एवमविवक्षितह्रस्वत्व-दीर्घत्वातिरिक्तपरिमाणाः संयुक्तबिन्दुधारा एव च रेखाः सम्पाद्याः। तथा च गणकानां खगोले दृग्रेखादिकास्तेजआदिपरमाणुभिः। एकेन विभुसंयोगेन संयुक्तः परमाणुरेकस्य क्षेत्रस्य केन्द्रादिबिन्दुर्भवति। परन्तु तस्मिन् संयोगे नष्टे संयोगान्तरेण विभुसंयुक्तः, स एव चेदपि परमाणुस्तदानीं न स पूर्वक्षेत्रस्य केन्द्रादिर्भवति, चालितत्वात्। क्षेत्रस्यापि सहचालितत्वे तु सम्भवत्यपि। तदानीं तदीयसंयोगस्यैव चलितक्षेत्रकेन्द्रबिन्दुत्वप्रयोजकत्वात्। अतस्तत्तत्संयोगविशिष्टत्वरूपं नियतस्थानत्वं तत्तत्केन्द्रादिबिन्दुत्वे प्रयोजकमुक्तम्। दर्शनयोग्यत्वं तु दर्शनयोग्यचिह्नादिनोपलक्षिततत्वमात्रम्, न तु साक्षात्। तथा सति महत्त्वापत्त्या निरवयवत्वानुपपत्तेः। त्रसरेणौ विश्रान्तिपक्षस्तु सावयवत्वसाधकचाक्षुषद्रव्यत्वादिहेतुविरुद्धः। तस्यैव वा निरवयत्वाङ्गीकारे अस्तु, तथा स एव बिन्दुर्दृश्यश्च।

अत्यन्तमाधुनिकाः पाश्चात्त्या वैज्ञानिका गणितिनश्च लक्षणानपेक्षाण्येव बिन्दुरेखाप्रभृतीनि सर्वेषां प्रतिभासिद्धानि, तत एव गणितस्य प्रवृत्तिरिति मन्यन्त इति पृष्टः प्रत्याह तत्रभवान्

श्री आर० एस० मिश्रमहोदयो हिन्दुविश्वविद्यालये वर्तमानगणितविभागाध्यक्षः। तदेतन्मतमपि लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति मानमर्यादातिक्रमेऽपि न तादृशबिन्दुसंयोगेन रेखानिष्पत्तिं प्रतिषेधति। रेखाया रेखान्तरेण सम्पाते प्रतिभासिद्धमित्युक्त्वा गणयत्येव प्रत्युत तत्र बिन्दुम्। सर्वमपि यथावदभ्युपगच्छति, किन्तु केवलं लक्षणकरणे शालीनतां प्रकटयति तदेतन्मतमित्येव।

तदेवं परमाणुसंयोगमनङ्गीकृत्य पदमपि गणितं चलितुं नैव प्रभवति, किं पुनर्विज्ञानम्? यज्जीवातुर्गणितम्। ये पुनर्गणितिनो गणका वा अपदार्थमेव बिन्दुरेखादिकमिच्छन्ति, ते तु स्वसिद्धान्तमेवालोकयन्ति। नमस्तेभ्यो महद्भ्यः।

## बौद्धाक्षेपपरामर्शः

अथाक्षेपेषु बौद्धानां बुद्धिं समालोच्य समापयामः प्रस्तुतम्। परमाणुभिः क्षणिकैः सङ्घातवादो वैनाशिकानामेतेषामुक्तः। परमाणूनां चतुर्विधानां खरस्नेहोष्णत्वेरणस्वभावानां पृथिव्यादिबाह्यरूपेण, पञ्चस्कन्धानां चाध्यात्मरूपेण सङ्घातो जायत इति ते वदन्ति। कथं तदवयव्यनङ्गीकर्तॄणां तेषामसंयुक्तैः परमाणुभिः स्यात्? परमाणुपुञ्ज एव घटादिस्तन्मते। न चेत्संयुक्तः स परमाणुपुञ्जः कथं घटादिकार्यकारी स्यात्? यद्यसंयुक्तः परमाणुपुञ्ज एव घटः, तर्हि जलं तस्माद्विशेषतो गलेत? चयोतेत् सामान्यतोऽच्छिद्रमपि पात्रम्। अतः संयुक्तपरमाणवः क्षणिका एवोत्पन्ना घटादय इति बौद्धैरनिच्छद्भिरपि वक्तव्यम्। तथा च केनावच्छेदेन संयोग इति दुर्वारमेव सर्वमपि प्रश्नजातम्। क्षणिकोऽपि नावयवी परमाणुस्तन्मते, येन तदवयवस्तत्रावच्छेदक उच्येत, अवयविस्वीकारापत्तेः। अतः क्वाप्यवयवत्वेनावयवस्यैवावच्छेदकत्वमिति न कोऽपि बौद्धभेदः स्वयमभ्युपगच्छति, न वा नैयायिकस्तथा, तत्कथं तेन दूष्यते?

'इलक्ट्रॉन्' कणानां चञ्चलरजःस्वभावानां भ्रमिशीलानामपि 'प्रोटॉन्' कणाकृष्टत्वेन सन्निकृष्टत्वं सन्निबद्धत्वं वा यत्तत्र प्रचयवत् सावकाशसंयुक्तत्वविशेष एवान्तर्भूतमिति नैयायिकाभिमतम्। तैरभ्युपगतमेव अग्नावधिश्रितस्थाल्यामग्निरन्तः प्रविशति, उत्तापयति चान्तर्जलं यावत्तावत् ससूक्ष्मच्छिद्रैव स्थालीति। तेन तादृशकणमयत्वाद् घटादिसङ्घातानां सान्तरत्वमेवेति वैज्ञानिकनिर्वचनमादायापि न संयुक्तत्वे विवदितुं युज्यते। भ्रमिवशात् तादृशनिर्वचने नवनवसंयोगस्यावश्यकत्वोक्तावपि संयुक्तत्वं नैव हीयते। संयोगेऽपि निबिड-दृढ-शिथिल-सन्निकृष्टत्व-सन्निबद्धत्वादिभेदा इष्यन्त एव। घटादिसङ्घातानां यावता जलादिधारणम्, तावता संयुक्तपरमाणुकत्वमेव। अतो वैज्ञानिकनिर्वचनमालम्ब्य सङ्घातानामसंयुक्तपरमाणुपुञ्जत्वसमर्थनप्रत्याशा दुराशैव। ततो नात्र बहु वक्तव्यमपेक्षितम्।

यस्तु कश्चिद् बौद्धैकदेशी सर्वत्र स्वभावमेवोत्तरयति तस्य सर्वत्र प्रश्नेऽपि तदेवोत्तरमिति प्रश्नस्यैवानुत्थानपराहतत्वम्।

तस्मात् परमाणुसंयोगे न्यायवैशेषिकोपरि नातीव भ्रूभङ्गोऽश्रुतनयेन केनापि कर्तुमुचित इत्यस्ति साधुः प्रसङ्गः।

—:०:—

# ग्रन्थसमालोचनम्

## १. वस्त्वलङ्कारदर्शनम्

प्रकाशको डॉ० ब्रह्मानन्दशर्मा, संस्कृतविभागाध्यक्षः, राजकीयमहाविद्यालयः, अजमेरः। पृ० ८४; मूल्यम्—रूप्यकचतुष्टयम्।

पुस्तकस्यास्य प्रणेता डॉ० ब्रह्मानन्दशर्ममहोदयः अजमेरस्थे राजकीयमहाविद्यालये संस्कृतविभागाध्यक्षः। अनेन महानुभावेन हिन्दीभाषायामपि पुस्तकमेकं लिखितमलङ्कार-संबन्धे—'संस्कृत साहित्य में सादृश्यमूलक अलङ्कारों का विकास' इति। आलोच्यमाने ग्रन्थे त एवालङ्कारा निरूपिता यत्र वैशिष्ट्येन वस्तुजगता सह संबन्ध इति। 'अर्थालङ्कारस्य लोकसंबन्धः' 'लोकसंबन्धजन्या अर्थालङ्कारगता विभिन्नाः प्रतीतयः', 'अनुमानालङ्कारस्य काव्यलिङ्गेऽन्तर्भावः' 'परिकरालङ्कारस्य अर्थान्तरन्यासे काव्यलिङ्गे वाऽन्तर्भावः' इत्यादयो निबन्धाः पठनीयाः। अलङ्काराणां तर्कमूलकता, विरोधमूलकता, लोकनियममूलकता च प्रतिपादिताः। तदनु प्रायशो द्वाविंशतिसंख्याकानामलङ्काराणां विवेचनम्।

उदाहरणानि लक्षणग्रन्थेभ्य एव गृहीतानि। तानि मूलग्रन्थेभ्यो ग्राह्याण्यभूवन्नध्येत्रु-पकाराय। भूयिष्ठा मुद्रणदोषाः सितायां रेणुकाकणवद् वैरस्यं जनयन्ति। भविष्यति संस्करणे तेषामपनोदः स्यात्।

## २. सफलो विद्यार्थी

प्रणेता -श्रीरामचन्द्रभारती, प्रकाशकः श्रीरामचन्द्रो भारती, २५१८, चूड़ीवालान, दिल्ली-६। मूल्यम्-८-२५।

चरित्रनिर्माणाय. संस्कृतभाषायाः शिक्षा परमावश्यकीति सर्वैर्विद्वद्भी राष्ट्रनायकैश्च स्वीक्रियते। शिक्षाबीजं शैक्षाणां मानसभूमौ क्षिप्रं प्ररोहति। एतदर्थं शैक्षाणामुपयोगाय संस्कृतभाषायां पुस्तकानां रचना महते लाभाय कल्पते। एतादृश एव प्रयत्नः कृतो भारत्यु-पाह्वेन श्रीरामचन्द्रेण 'सफलो विद्यार्थी' इति पुस्तकं रचयता। पुस्तकेऽस्मिन्नुपवर्णिताः शताधिका विषयाः। तत्र प्राचीना आचाराः, आधुनिकानि व्यावहारिकाणि ज्ञानानि, कर्तव्यता, ऐतिहासिक्यः कथा, देशभक्तिश्चेत्यादीनां विषयाणां सचित्रं साङ्गोपाङ्गं निबन्धनमतीवाकर्षकम्।

सत्यप्येवं त्वरित पुस्तकप्रकाशनाय लेखकेन । तत्र सम्पादनज्ञानाभावेन सस्यसंपत्तौ प्रालेयपातवद् भ्रंशक्रमः । अन्तर्मुखपृष्ठे ग्रन्थान्तश्च सर्वत्र 'अद्यतन' इत्यस्य स्थाने 'अद्यतनीय'-शब्दप्रयोगो लेखकस्य स्वरचनानैपुणीं निर्दिशति । प्रतिपृष्ठं समस्तपदानां व्यस्तता लेखकस्य कार्यान्तरव्यस्ततां द्योतयति । एकविंशे पृष्ठे मृत्युशब्दस्य, १७६ पृष्ठेऽवधिशब्दस्य च स्त्रीत्वेन प्रयोगः । वृत्तान्तपत्रार्थकस्य समाचारपत्रेति शब्दस्य संस्कृतभाषायामशक्तता । द्वाविंशे पृष्ठे मन्धातोर्निष्पन्नस्य मानशब्दस्य नपुंसकलिङ्गे प्रयोगः । एवं तावत् संपूर्णग्रन्थे सन्ति विप्रतिपत्तयः । इमास्त्रुटयः शैक्षाणां हृदये प्रतिकूल संस्कारं स्थापयिष्यन्ति । नास्तीदं तेभ्यो हितायेत्यस्य पुस्तकस्य संस्करणान्तरमेव विक्रयार्थं प्रस्तोतव्यम् । लेखकेन कस्यचन सम्पादनप्रवीणस्य विदुषः साहायकमनिवार्यतया आस्थेयम् । ग्रन्थे चैकरूप्यं कल्पनीयम् । वस्तुतो लेखकस्य विषयाद्युपस्थापनक्रमः श्लाघ्यः ।

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

## ३. अध्वरमीमांसाकुतूहलवृत्तिः

ग्रन्थोऽयं भागद्वयात्मकः श्रीवासुदेवदीक्षितविरचितः । संपादकः शास्त्ररत्नाकरविद्यासागरश्रीपट्टाभिरामशास्त्रिणः । प्रकाशनस्थानम्—श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्, दिल्ली । मूल्यम्—प्रतिभागं रु० ३० ) ।

भाट्टमतानुसारिमुद्रितग्रन्थकोशस्य इदानीमुत्कर्षान्तरं श्रीवासुदेवदीक्षितकृताध्वरमीमांसाकुतूहलवृत्तिप्रकाशनेन समजायत । जैमिन्युपज्ञानां मीमांसासूत्राणां हि प्रथमं भगवानुपवर्षो वृत्तिं व्यधात् । परमस्याः संक्षिप्तत्वमभिसन्धाय आचार्यशबरस्वामिनः सूत्राणां विस्तीर्णं भाष्यं रचयामासुः । भाष्यस्यातिगम्भीरतया तदर्थविवरणाय श्रीमन्तौ कुमारिलप्रभाकरौ वार्त्तिकटीके विधाय भाष्यमभूषयताम् । इमे च व्याख्योपव्याख्याभिर्विस्तरं प्राप्नुताम् । एवं गच्छति काले पार्थसारथिमिश्रा विना सूत्रस्पर्शं मूलग्रन्थाभिप्रायानेकीकृत्य मीमांसाधिकरणानि संक्षेपेण व्यवृण्वन् भाट्टसिद्धान्तमनुरुध्य शास्त्रदीपिकायाम् । भवनाथमिश्राश्च प्रभाकरमतमनुसृत्य नयविवेके । इमौ च ग्रन्थौ व्याख्याभिः समवर्धेताम् । सप्तदशकमध्ये च प्रादुर्भूताः मीमांसकसार्वभौमाः खण्डदेवमिश्राः काश्यां स्थित्वा मीमांसाधिकरणानि नवीनतार्किकशैल्या परिष्कृत्य भाट्टदीपिकाख्यं ग्रन्थरत्नं रचयामासुः । तच्छिष्याः शम्भुभट्टाश्च स्वीयटीकया तद्ग्रन्थमुपबृंहयामासुः । परन्तु यद्यपि खण्डदेवस्तृतीयाध्यायतृतीयपादान्त

सूत्रजातं स्वीये मीमांसाकौस्तुभे व्याचख्यौ, तथापि तदुपरितनानां मूलसूत्राणां यथावदर्थ-परिज्ञानं दुश्शकमासीत्। ततो दक्षिणभारते चौलषु समुत्पन्नो वासुदेवदीक्षितनामा मीमांसक-मूर्धन्यो विस्तरेण सरलया शैल्या द्वादशाध्यायान्तं सर्वाणि सूत्राणि व्याख्याय अध्वरमीमांसा-कुतूहलवृत्ति नाम ग्रन्थरत्नं निबबन्ध। तत्र च 'कुतूहले'ति विशेषणं स्वेनायं ग्रन्थो लीलया निर्मित इति प्रकटनाय, पठितारश्च विना क्लेशं मीमांसाशास्त्रतत्त्वं ज्ञास्यन्तीत्यभिप्रायसूचनाय चोपात्तम्।

दृश्यते चास्य ग्रन्थस्य पठनेनाशेषाणामलौकिकश्रौतपदार्थानां मीमांसान्यायानां च विनायासं यथावदवबोधः, तदिदमसाधारणं प्रयोजनमस्य ग्रन्थस्य। अपि च मीमांसाशास्त्रं निरीश्वरमिति प्रसिद्धम्, आचार्यशबरस्वामी च नवमप्रथमे कण्ठोक्त्यैव देवताविग्रहादिकं निरस्यति। अयं तु ग्रन्थकर्ता बहुश्रुत्युदाहरणेन सूत्रवार्त्तिककारयोर्देवताविग्रहे प्रद्वेषो नास्ति, कर्मणि देवतानां गुणभाव एव तयोस्तात्पर्यमिति प्रसाध्य शबरस्वामिनां देवताविग्रह-निराकरणं प्रौढिवाद इत्याह।

अत एव "न देवानाम्, देवतान्तराभावात्; न ऋषीणाम्, आर्षेयान्तराभावात्" इति सूत्रे षष्ठप्रथमगते संगच्छेते, देवानां विग्रहमङ्गीकृत्य कर्मानधिकारनिवर्तनाय तयोः प्रवृत्तत्वात्। यद्यपीमे सूत्रे मुद्रितभाष्यपुस्तकेषु न दृश्यते, भाष्यवाक्यत्वेनैव च दृश्येते, तथापि इमे सूत्रत्वेनैव व्यवहृते देवताधिकरणे ब्रह्मसूत्रशाङ्करभाष्यतट्टीकादिषु। कुतूहलवृत्तिकारश्च सूत्रत्वेनैव लिखित्वा विस्तरेण विवृणोति।

अत एव मीमांसाभाष्यगतमिदं वाक्यद्वयं कथं ब्रह्मसूत्रभाष्यादिषु सूत्रत्वेन व्यवहृत-मिति ज्ञातुं कुतूहलिनां कुतूहलवृत्तिदर्शनेन निर्णयो जातः।

केषुचिदधिकरणेषु धैर्येण भाष्यादिनिराकरणमेतद्ग्रन्थकर्त्रा कृतमुपोद्घात एव संगृहीतमस्ति।

यद्यप्ययं ग्रन्थः श्रीरङ्गस्थवाणीविलासमुद्रणालयाधिपेन माकिं पञ्चाशदवर्षेभ्यः प्राग् मुद्रणायोपक्रान्तः, परन्त्वध्यायद्वये समाप्तिं गत इति विषादास्पदमासीत्।

सम्प्रति विदुषां भाग्यवशात् सुगृहीतनामधेया विद्यासागरादिविविधबिरुदभूषिताः, मीमांसकावतंसाः श्रीपट्टाभिरामशास्त्रिणो भिन्नभिन्नदेशस्था बह्वी मातृका आनाय्य लेखयित्वा परिशोध्य दिल्लीस्थराष्ट्रियविद्यापीठद्वारा प्रकाशमनयन्। अक्षराशुद्ध्यादिरहितं मुद्राप्य ग्रन्थमिममिदंप्रथमतया प्रकाशितवद्भ्यः श्रीशास्त्रिवर्येभ्यः पण्डितकुलमधमर्णमेव। भागद्वये अष्टाध्याया अन्तर्गताः। अवशिष्टा अध्याया अचिरात्प्रकाशमेष्यन्तीति विश्वसिमः।

एस० सुब्रह्मण्यशास्त्री

## वाराणसेय-संस्कृतविश्वविद्यालये

अस्मिन् वर्षे ( १९६९–७० ) प्रवर्तमानानि

# अनुसन्धानकर्माणि प्रकाशनकर्माणि च

### अनुसन्धान-कर्माणि

अस्मिन् वर्षे ( १९६९–७० ) संस्कृतवाङ्मयस्य विभिन्नासु शाखासु अनुसन्धित्सवोऽधोलिखितनामानश्छात्राः स्वस्वनामानि पञ्जीसमारोपिता—

### 'वाचस्पति' ( डी० लिट्० ) इत्युपाधिलाभाय

| | |
|---|---|
| १. श्रीबद्रीनाथसिंहः | 'न्यायशास्त्रे शब्दविमर्शः' |
| २. कुमारी सुनीता खन्ना | 'योगवार्तिक का आलोचनात्मक अध्ययन तथा सम्पादन' |
| ३. ,, रमामिश्रा | 'धर्मतत्त्वस्य वैदिकमूलस्याध्ययनम्' |
| ४. ,, सन्तोषकुमारी | 'काच्चायनव्याकरणस्यान्यव्याकरणैस्सह तुलनात्मकं समीक्षात्मकं चाध्ययनम्' |
| ५. श्रीमती चन्द्रकला मिश्र | 'हिन्दी रीतिकालीन काव्यभाषा ( १८ वीं और १९ वीं शती ) का भाषाशास्त्रीय अध्ययन' |
| ६. श्रीरामदेवशुक्लः | 'देवरिया जिले में प्रयुक्त जनपदीय शब्दावली का भाषावैज्ञानिक अध्ययन' |
| ७. ,, श्यामनारायणतिवारी | 'उत्तरभारतीय लोक अभिप्राय संरचना' |
| ८. ,, श्यामसुन्दरशुक्लः | 'आयुर्वेदस्य क्रमिकविकासः' |
| ९. ,, लक्ष्मणत्रिवेदी | 'सौगताभिमतकार्यकारणभावस्तत्समीक्षणञ्च' |
| १०. ,, रामायण-प्रसाद-दुवे | 'आचार्यनागार्जुनस्य दार्शनिकसिद्धान्तानां समीक्षात्मकमध्ययनम्' |
| ११. ,, नरेश झा | 'गांधीविचाराणां दार्शनिकं विवेचनम्' वि० वि० छात्रवृत्तिः |
| १२. ,, विन्ध्येश्वर-पाण्डेयः | 'भारतीयदर्शनेषु विभुद्रव्यविषयकमतभेदानां समन्वयसम्भावनाविमर्शः' |
| १३. ,, कमलाकान्तशुक्लः | चित्रमीमांसाकुवलयानन्दयोर्जगन्नाथोद्भावितदूषणानां समालोचनम्' |

| | | |
|---|---|---|
| १४. ,, कन्हैयालाल-पाण्डेयः | 'हिन्दी में उपसर्गों एवं निपातों का वैज्ञानिक अध्ययन' | |

## 'विद्यावारिधि' ( पी-एच० डी० ) इत्युपाधिप्राप्तये

| | | |
|---|---|---|
| १. श्री रामेश्वरशर्मा | 'वेदेषु पारिवारिकी व्यवस्था' | |
| २. " केशवप्रपन्नशर्मा | 'सीरदेवपरिभाषावृत्ति, परिभाषेन्दुशेखरयोस्तुलनात्मकमध्ययनम्' | २००) भारत शासनात् |
| ३. " चक्रपाणिशर्मा | 'शब्दशक्तिप्रकाशिकाग्रन्थस्य हिन्दीभाषायामनुवादः' | " " |
| ४. " प्रियतमचन्द्रशास्त्री | 'विक्रमाङ्कदेवचरितस्य साहित्यिकं सर्वेक्षणम्' | २००) भारत शासनात् |
| ५. " रामेसरओरी | 'मारिसस एवं भोजपुरीभाषाणां पारस्परिकसम्पर्कालोके तेषां भाषावैज्ञानिकमध्ययनम्' | |
| ६, " वशिष्टनारायणपाण्डेयः | 'मानवजीवने ग्रहाणां प्रभावः' | |
| ७. " रजनीकान्तझा | 'संस्कृतसाहित्ये करुणो रसः' | |
| ८. ,, दयाकृष्णपन्तः | 'अलङ्कारकौस्तुभस्तस्य लेखकश्च इत्येतयोरध्ययनम्' | |
| ९. ,, रामदासनिराकरी | 'अरविन्ददर्शनस्य समालोचनात्मकमध्ययनम्' | |
| १०. ,, ओमप्रकाशशर्मा | 'शङ्करनिम्बार्कयोस्तुलनात्मकमध्ययनम्' | |
| ११. ,, राजेन्द्रझा | 'संस्कृतसाहित्ये चम्पूकाव्यानि' | |
| १२. ,, विजयपालसिंहः | 'अष्टाध्यायीशुक्लयजुःप्रातिशाख्ययोर्मतविमर्शः' | २५०) यू०जी०सी० इत्यस्मात् |
| १३. ,, विभूतीनारायणपाण्डेयः | 'परिभाषेन्दुशेखरस्य अप्रकाशितटीकानां सम्पादनम्' | |
| १४. ,, वज्राङ्गी पाठकः | 'शब्दशक्तिप्रकाशिकायाः आलोचनात्मकमध्ययनम्' | २००) भारत शासनात् |

| | | | |
|---|---|---|---|
| १५. ,, | रामअवधपाण्डेयः | संस्कृतशतकसाहित्यम्, तत्र च अमरुशतकस्य समीक्षणम्' | २००) भारत शासनात् |
| १६. ,, | प्यारेलालमिश्रः | 'कृत्प्रत्ययार्थविमर्शः' | ,, ,, |
| १७. ,, | काशीनाथमिश्रः | 'सिद्धान्तराजस्य सम्पादनम्' | ,, ,, |
| १८. ,, | परमानन्दउपाध्यायः | 'षड्विधसूत्राणामुत्सर्गापवादयोरन्तर्भावः' | ,, ,, |
| १९. ,, | चन्द्रभालद्विवेदी | 'जैनयोगशास्त्रे मनोविज्ञानतत्त्वम्' | ,, ,, |
| २०. ,, | मणिरामदासशास्त्री | 'रामानुजरामानन्दभाष्ययोस्तुलनात्मकमध्ययनम्' | ,, ,, |
| २१. ,, | त्रिवेणीप्रसादशुक्लः | 'वाल्मीकिरामायणस्य काव्यदृष्ट्यानुसुशीलनम् | १००) वि० वि० वृत्तिः |
| २२. ,, | लालजीपाठकः | पञ्चसु संस्कृतमहाकाव्येषु ऋतुवर्णनम्' | २००) भारत शासनात् |
| २३. ,, | ओंकारनाथचतुर्वेदी | 'वलनविमर्शः' | |
| २४. ,, | कृष्णकान्तवाजपेयी | 'अंग्रेजी में भारतीय भाषाओं से गृहीत शब्दों का अध्ययन' | |
| २५. ,, | विश्वनाथत्रिवेदी | 'पुराणेषु वर्णाश्रमव्यवस्था' | |
| २६. ,, | रामदुलारसिंहः | 'पालिपाण्डुलिपिवाङ्मयस्य ऐतिहासिकं समीक्षात्मकं चाध्ययनम्' | |
| २७. ,, | परमानन्दप्रज्ञाचक्षुः | ज्ञान-ज्ञेययोः सम्बन्धविषये नामद्वैतवेदान्तमतस्यान्यवैदिकदर्शनानां मतैस्सह तुलनात्मकं विवेचनम्' | २००) भारत शासनात् |
| २८. | श्रीरामचन्द्रत्रिपाठी | 'अश्वघोषकाव्येषु वाल्मीकिरामायणस्य प्रभावालोचनम्' | |
| २९. ,, | हरिश्चन्द्रमणित्रिपाठी | 'निपातार्थपरीक्षा' | २५०) यू० जी० सी० वृत्ति |
| ३०. ,, | उमेशचन्द्रपाण्डेयः | 'वैष्णवदर्शनेषु जीवविषयकविचाराणां पर्यालोचनम्' | २००) भारत शासनात् |
| ३१. ,, | अमृतलालजैन | 'चन्द्रप्रभचरितमहाकाव्यस्य विशिष्टमध्ययनं सम्पादनञ्च' | |
| ३२. ,, | अहिबरनसिंहः कुशवाहा | 'वैदिकीशिल्पदेवता विश्वकर्मा' | |

३३. ,, शिवप्रसादद्विवेदी 'वैष्णवदर्शनानुसारेणात्मतत्त्वविचारः'

३४. ,, विद्याधरमिश्रः 'श्रीशङ्कराचार्यकृतस्तोत्राणां साहित्यशास्त्रीयमनुशीलनम्'

३५. ,, रामप्रसादत्रिपाठी उपमोत्प्रेक्षयोर्विवेकः'

३६. ,, बाबूलालत्रिपाठी 'शब्दस्वरूपविषये प्राच्यप्रतीच्य-
दार्शनिकविचारैः सह वैयाकरण-
सिद्धान्तस्य समीक्षणम्' २००) भारत शासनात्

३७. ,, विनायकपरमेश्वरभट्टः 'कर्मकारकस्य समीक्षणम्'

३८. ,, कपिलदेवभार्गव त्रिपाठी 'स्त्रीप्रत्ययार्थविचार.'

३९. ,, नमोनारायणमिश्रः 'नामार्थविमर्शः' २००) भारत शासनात्

४० रामरूपमिश्रः 'महाभाष्ये उद्योतप्रदर्शितानां चिन्त्यप्रयोजनानां
पर्यालोचनम्'

४१. ,, रामचन्द्रद्विवेदी 'वाक्यपदीयदृष्ट्या पदस्वरूपविमर्शः १००) वि० वि०

४२. ,, गोवर्धनधारीशर्माः 'भाट्टरहस्यस्य तुलनात्मकं समालोचनम्'

४३. , चन्द्रशेखरवर्मा 'प्राचीन इतिहास'

४४. ,, महानन्दत्रिवेदी 'वामनपुराणस्य सांस्कृतिकमध्ययनम्' १००) वि० वि०

४५. , भारतीमित्र 'महाभाष्यगतप्रयोगाणां समीक्षणम् २००) भारत शास०

४६. ,, शिवशरणसिंहचौहानः 'महाभारते सांख्यतत्त्वविमर्शः' ,,

४७. ,, दीनानाथ उपाध्याय 'वाक्यार्थविमर्शः'

४८. , देवनारायणदासश्रीवैष्णवः 'वेदान्तस्य विभिन्नसम्प्रदायेषु
अविद्याविषयकविचाराणां
पर्यालोचनम्' २००) भारत शासनात्

४९. ,, श्रीप्रसादचतुर्वेदी 'लघुशब्देन्दुशेखरपदमञ्जर्योर्विशिष्टांशानां तुलनात्मक-
मध्ययनम्'

५०. श्रीमती मालतीदेवी दुबे 'अवधीवाक्यरचना का भाषावैज्ञानिक अध्ययन'

५१. श्रीसोभनाथत्रिपाठी प्राचीनभारते राज्योत्पत्तिः, राज्यव्यवस्था च ।

५२. ,, मनुदेवभट्टाचार्यः व्याकरणतन्त्रानुसारं शब्दस्व-
रूपविमर्शः' २००) भारत शासनात्

५३. ,, शम्भूप्रसादनौटियालः सूर्यशतकस्य काव्यशास्त्रीयमध्ययनम्'

५४ ,, हिन्दकेशरीआर्यः 'महाभाष्यकारवाक्यपदीयकारयोः
शब्दविषयकविचाराणां समीक्षणम्' २००) भारत शास०

५५. श्रीमती अरुणा दुबे 'भाषाशास्त्रीय दृष्टि से सूर एवं बख्शी राजहंस की
काव्यभाषाओं का तुलनात्मक अध्ययन'

५६. श्री मालतीदेवी पाण्डेया 'देवीभागवतस्य दार्शनिकदृष्ट्याध्ययनम्'

५७. „ बदरीनाथतिवारीः 'विनयपत्रिका का भाषाशास्त्रीय अध्ययन'
५८. „ अमरनाथपाण्डेयः 'घनानन्द की काव्यभाषा का भाषाशास्त्रीय अध्ययन'
५६. „ सन्तदासश्रीवैष्णव 'नामधातूनां विशिष्टमध्ययनम्'
६०. कुमारी जयन्ती भट्टाचार्या 'गरुडपुराणस्य सांस्कृतिकमध्ययनम्'
६१. „ गोकरणशुक्लः 'परिभाषेन्दुशेखरप्रथमतन्त्रसमीक्षा
६२. „ भोलानाथपाण्डेयः 'पाणिनीयव्याकरणे गणपाठसमीक्षा'
६३. „ काशीनाथमिश्रः 'भाषाशास्त्रदृष्ट्या सिद्धान्तकौमुद्याः क्रमस्य विवेचनात्मकमध्ययनम्'
६४. „ सदानन्ददुबे वाराणसीजनपद में प्रयुक्त व्यवसायिक शब्दावली का भाषावैज्ञानिक अध्ययन' १००) वि० वि० वृत्तिः
५५. „ दामोदरदासः 'श्रीमद्भागवतस्य सांस्कृतिकं समीक्षणम्'
६६. „ त्रिभुवननारायणसिंहः 'हिन्दी और भोजपुरी के परस्पर सम्पर्कजन्य प्रभाव का भाषावैज्ञानिक अध्ययन'
६७. „ नरसिंहपाण्डेयः 'कालिकापुराणस्य सांस्कृतिकमध्ययनम्'
६८. „ शत्रुघ्नशरणव्यासः संस्कृतनाटिकायाः उद्भवो विकासश्च' २००) भा० शा०
६६. „ रामसिंहआजादः 'पण्डों और गाइडों का तुलनात्मक अध्ययन' १००) वि० वि० वृत्तिः
७०. „ ज्ञानचन्द्रः 'भारत में १५ वीं शती तक पुस्तकालयीय व्यवस्थाओं का समीक्षात्मक अध्ययन'
७१. „ विनोदगुर्जरः 'वाराणसीनगर के हिन्दी के उपनामक शब्दों का संघटनात्मक अध्ययन'
७२. „ विजयचन्द्रदुबे भाषावैज्ञानिक दृष्टि से भोजपुरी और हिन्दी वाक्य-संरचना का तुलनात्मक अध्ययन'
७३. „ हरिराव आठवले 'अथर्ववेदे प्रतिरक्षाव्यवस्था'
७४. „ सहजानन्दतिवारी 'चिकित्सकीयवायुतत्त्वविमर्शः'
७५. चलमचर्लवेंकटेशाचार्युलु 'पाञ्चरात्रान्तर्गतमार्कण्डेयसंहितायाः नवीनं संस्करणमध्ययनञ्च'
७६. श्रीमती करुणागुप्ता 'विभिन्नदर्शनमतानुसारम् अर्थस्वरूपविमर्शः'
७७. श्रीविश्वनाथभट्टाचार्यः 'व्यवहारसौख्य'–ग्रन्थस्य सम्पादनम् १००) वि० वि०
७८. श्रीसालिकतिवारी 'कालिदास तथा शेक्सपीयर के नाटकों के बिम्बविधान का तुलनात्मक अध्ययन'
७६. „ दीनदयालुमिश्रः 'तद्धितार्थविमर्शः'

| | | |
|---|---|---|
| ८०. | ,, बाबूरामपाण्डेयः | 'स्फोटविमर्शः' |
| ८१. | श्रीमती प्रकाशवती श्रीवास्तव | 'साहित्यिक ब्रजगद्य का वाक्यप्रक्रियात्मक अध्ययन' |
| ८२. | कु० रुक्मावती देवी | 'तान्त्रिकाद्वैतवादस्य स्वरूपं तस्य क्रमिको विकासश्च' |
| ८३. | श्रीहृदयनारायणझाः | 'प्राचीनभारतीयदण्डनीतिसमीक्षा' |
| ८४. | ,, बुधप्रकाशः | 'सांख्यशास्त्राभिमतगुणस्वरूपविचारः' |
| ८५. | ,, रामप्रकाशदीक्षितः | 'हिन्दी ध्वनियों का संरचनात्मक विश्लेषण' |
| ८६. | ,, रामसुभगओझाः | 'उत्तररामचरितकुन्दमालयोस्तुलनात्मकविचारः' |
| ८७. | ,, वासुदेवशास्त्री | 'विशिष्टो रसवादः' |
| ८८. | ,, सुधीरनारायणठाकुरः | 'प्रौढमनोरमाशब्दरत्नयोः विचारभेदानां युक्तायुक्तत्वसमीक्षा' |
| ८९. | ,, रामचन्द्रदासश्रीवैष्णवः | 'लघुमञ्जूषोपन्यस्तसिद्धान्तानां पर्यालोचनम्' |
| ९०. | ,, अयोध्यादासः | 'समासशक्तिसमीक्षा' १००) वि० वि० छात्रवृत्तिः |
| ९१. | ,, पी० के० गोपालकृष्ण | 'ज्ञापकसिद्धवचनानां परीक्षात्मकमध्ययनम्' |
| ९२. | ,, रामकैलाशपाण्डेयः | 'आयुर्वेदशारीरविमर्शः' |
| ९३. | ,, के० ई० गोविन्दः | 'पदार्थमालाया वैज्ञानिकं समीक्षात्मकं च सम्पादनम्' |
| ९४. | ,, रामप्रकाशदासः | 'भाट्टप्राभाकरप्रस्थानयोः प्रमाणप्रमेयविमर्शः' |
| ९५. | ,, रामाज्ञाप्रसादमिश्रः | 'तद्धितप्रत्ययार्थविमर्शः' |
| ९६. | ,, दयारामशुक्लः | 'धातूपसर्गसमीक्षा' |
| ९७. | ,, रामदेवझा विनोदः | 'ज्योतिषपुराणयोर्दृष्ट्या ग्रहाणामध्ययनम्' |
| ९८. | ,, शारदानिवासशास्त्रीः | 'तन्वादिभावानां वैज्ञानिकविश्लेषणम्' |
| ९९. | ,, बनवारीलालपाठकः | 'भारतीयज्योतिषे रमलसाहित्यम्' |
| १००. | ,, सूर्यनारायणझा | कवीन्द्रगङ्गानन्दस्य रचनानां समालोचनात्मकमध्ययनम्' |
| १०१. | ,, हरिकृष्णभारद्वाजः | 'सुबन्धुबाणयोरलंकारप्रयोगपरिपाटीपर्यालोचनप्रधानं 'गद्यशैल्याम् अध्ययनम्' |
| १०२. | ,, जयप्रसादबालोधी | 'कालिदासकृतीनां रसालंकारदृष्ट्यानुशीलनम्' |
| १०३. | ,, रामप्रसादमिश्रः | 'औचित्यविचारचर्चायाः अनुशीलनात्मकमध्ययनम्' |
| १०४. | ,, रामसूरतपाण्डेयः | अवधी लोकगीतों में सादृश्यविधान अर्थविज्ञानपरक अध्ययन' |
| १०५. | ,, शिवलालपाठकः | 'आधुनिक हिन्दी तथा तिब्बतीभाषाओं की वर्णसंघटना का व्यतिरेकी विश्लेषण' |
| १०६. | ,, शिवशंकरसिंहः | 'हिन्दी के विभिन्नस्तरों का भाषाशास्त्रीय अध्ययन' |
| १०७. | कु० बालचन्द्रिका पाठक | '१७ वीं १८ वीं शती के ब्रजपद साहित्य का रीतिविज्ञानपरक अध्ययन' |

| | |
|---|---|
| १०८. ,, कमलाद्विवेदी | 'अज्ञेय की काव्यभाषा का रीतिविज्ञान का अध्ययन' |
| १०९. ,, कमलेशजुनेजा | 'विवर्तवादान्तरैः सह शंकराचार्यविवर्तवादस्य तुलनात्मकमध्ययनम्' |
| ११०. श्री राजकुमार द्विवेदी | 'पञ्चमहाकाव्यानां भारतीयसामाजिकव्यवस्थादृष्ट्या मूल्याङ्कनम्' |
| १११. ,, प्रभाकरदत्त तिवारी | आधुनिक हिन्दी एवं संस्कृत में कतिपय उपसर्गों का अर्थविज्ञान की दृष्टि से तुलनात्मक अध्ययन' |
| ११२. ,, तेजप्रतापसिंहः | 'हिन्दी के तद्भव तत्सम शब्दों के पर्याययुग्मों का अर्थपरक विज्ञानविषयक अध्ययन' |

अधोलिखितनामभ्यः प्राचीनानुसन्धित्सुछात्रेभ्योऽस्मिन् वर्षे विश्वविद्यालयेन छात्रवृत्तिः प्रदत्ता—

१. कु० चन्द्रबाला श्रीवास्तव

२. श्री कालीप्रसाद दुबे

३. ,, अरुणेशकुमारमणिः

४. ,, राघवेशमणित्रिपाठी

५. ,, मंजुमणित्रिपाठी

'वाचस्पति-विद्यावारिधि'—इत्युपाधिद्वयलाभार्थमधोलिखितनामानोऽनुसन्धातारो यथानिर्दिष्टं स्वस्वशोधनिबन्धानुपस्थापितवन्तः—

| | |
|---|---|
| १. श्री यू० शंकरभट्टः | पञ्चरात्रान्तर्गतविश्वामित्रसंहितायाः नवीनसंस्करणं तुलनात्मकं समीक्षणं च 'विद्यावारिधिः' |
| २. ,, रामनारायणदासः | शब्दतत्त्व ( तत्सम्बन्धि ) आधुनिकविज्ञानं च 'विद्यावारिधिः' |
| ३. ,, रामदास-निराकारी | 'अरविन्ददर्शनस्य समालोचनात्मकमध्ययनम्' |
| ४. ,, रामाभिलाषत्रिपाठी | 'श्रीविष्णुभागवतपुराणयोस्तुलनात्मकं समीक्षणम्' 'विद्यावारिधिः' |
| ५. ,, श्रीमती रापर्ति बालामणि | 'हरविजयकाव्यचर्चा' 'विद्यावारिधिः' |
| ६. ,, रामाश्रयत्रिपाठी | महाकवि भारविस्तथा च तदीयं किरातार्जुनीयं महाकाव्यम् एकमध्ययनम्' |
| ७. ,, लक्ष्मीनारायणमिश्रः | 'आयुर्वेदे ज्योतिषम्' 'विद्यावारिधिः' |
| १. ,, विन्ध्येश्वरीप्रसादत्रिपाठी | 'भारतीयकर्मकाण्डरहस्यानाम् अध्ययनम्' 'वाचस्पतिः' |

